इत्युक्तः सकलं मात्रे कथयामास (१) तद्यथा ।
सुरुचिः प्राह भूपालप्रत्यक्षमपि (२) गर्विता ॥
विनिश्वस्येति कथिते तस्मिन् पुत्रे (३) सुदुर्मनाः (४) ।
श्वासक्षामेक्षणा (५) दीना सुनीतिर्वाक्यमब्रवीत् ॥
सुरुचिः सत्यमाहेदं स्वल्पभाग्योऽसि पुत्रक ।
न हि पुण्यवतां वत्स सपत्नैरेवमुच्यते (६) ॥
नोद्वेगस्तात (७) कर्त्तव्यः कृतं यद्भवता पुरा (८) ।
तत् कोऽपहर्त्तुं शक्नोति दातुं कश्चाकृतं त्वया ॥
राजासनं तथा छत्रं वराश्वा वरवारणाः ।
यस्य पुण्यानि तस्यैते मत्वैतच्छाम्य (९) पुत्रक ॥

---

(१) ध्रुव इति शेषः ।

(२) भूपालप्रत्यक्षमपि राज्ञः समक्षमेव ।

(३) तस्मिन् पुत्रे विनिश्वस्य इति कथिते कथितवति सति । कर्त्तरि क्तप्रयोग आर्षः ।

(४) सुदुर्मनाः अत्यन्तदुःखितहृदयः ।

(५) श्वासेन चाभि क्षीणे क्षाने इति यावत् ईक्षणे नेत्रे यस्याः सा ।

(६) सपत्नैः शत्रुभिः ।

(७) उद्वेगः क्षोभः ।

(८) पुरा पूर्व्वस्मिन् जन्मनि ।

(९) मत्वैतच्छाम्य एतत् मत्वा बुद्ध्वा शाम्य शान्तिं व्रज क्षोभं परित्यजेत्यर्थः ।

अन्यजन्मकृतैः पुण्यैः (१) सुरुच्यां सुरुचिर्नृपः (२)।
भार्य्येति प्रोच्यते चान्या मद्विधा भाग्यवर्ज्जिता ॥
पुण्योपचयसम्पन्नस्तस्याः पुत्त्रस्तथोत्तमः ।
मम पुत्त्रस्तथा जातः स्वल्पपुण्यो ध्रुवो भवान् (३)॥
तथापि दुःखं न भवान् कर्त्तुमर्हति पुत्त्रक ।
यस्य यावत् स तेनैव स्वेन तुष्यति बुद्धिमान् ॥
यदि वा दुःखमत्यर्थं सुरुच्या वचसा तव ।
तत् पुण्योपचये (४) यत्नं कुरु सर्व्वफलप्रदे ॥
सुशीलो भव धर्म्मात्मा मैत्त्रः (५) प्राणिहिते रतः ।
निम्नं यथापः प्रवणाः पात्रमायान्ति सम्पदः (६)॥

ध्रुव उवाच ।

अम्ब यत्त्वमिदं प्रात्थ प्रशमाय (७) वचो मम ।

---

(१) सुरुच्येति शेषः ।
(२) सुरुचिः अतिप्रीतिमान् अत्यन्तमनुरक्त इति यावत् ।
(३) तथा तादृशः मादृश इत्यर्थः ।
(४) पुण्योपचये पुण्यसञ्चये ।
(५) मैत्रः सर्व्वत्र मित्रभावापन्नः ।
(६) आपः जलानि निम्नं प्रदेशमिव सम्पदः प्रवणाः नम्राः सत्यः गुणरागेण वशीभूता इति यावत् पात्रं गुणशालिनं नरमायान्ति ।
(७) प्रशमाय चोभशान्तये ।

नैतद्दुर्वचसा (१) भिन्ने (२) हृदये मम तिष्ठति ॥
सोऽहं तथा यतिष्यामि (३) यथा सर्व्वोत्तमोत्तमम् ।
स्थानं प्राप्स्याम्यशेषाणां जगतामपि पूजितम् ॥
सुरुचिर्दयिता राज्ञस्तस्या जातोऽस्मि नोदरात् ।
प्रभावं पश्य मेऽम्ब त्वं वृद्धस्यापि (४) तवोदरे ॥
उत्तमः स मम भ्राता यो गर्भे न धृतस्त्वया ।
राजासनमवाप्नोतु पित्रा दत्तं तथास्तु तत् ॥
नान्यदत्तमभीप्सामि स्थानमम्ब स्वकर्म्मणा ।
इच्छामि तदहं स्थानं (५) यन्न प्राप पिता मम ॥
निर्जगाम गृहान्मातुरित्युक्त्वा मातरं ध्रुवः ।
पुराच्च निष्क्रम्य ततस्तद्बाह्योपवनं ययौ ॥

---

(१) सपत्नीमातुः सुरुच्या इति शेषः ।
(२) भिन्ने विदारिते अत्यन्तं व्यथिते इत्यर्थः ।
(३) यतिष्यामि यतिष्ये । परस्मैपदमार्षम् ।
(४) वृद्धस्य वृद्धिं प्राप्तस्य जातस्येति यावत् ।
(५) अहं स्वकर्म्मणा तत् स्थानमिच्छामीत्यन्वयः ।

## भरतोपाख्यानम् ।

—ooo—

मैत्रेय उवाच ।

यदेतद्भगवन्नात्थ भरतस्य महीपतेः ।
कथयिष्यामि चरितं तन्ममाख्यातुमर्हसि ॥

पराशर उवाच ।

शालग्रामे (१) महाभागो भगवन्न्यस्तमानसः (२) ।
स उवास चिरं कालं मैत्रेय पृथिवीपतिः ॥
अहिंसादिष्वशेषेषु गुणेषु गुणिनां वरः ।
अवाप परमां काष्ठां (३) मनसश्चापि संयमे ॥
समित्पुष्पकुशादानं चक्रे देवक्रियाकृते (४) ।
नान्यानि चक्रे कर्म्माणि निःसङ्गो योगतापसः (५) ।
जगाम सोऽभिषेकार्थमेकदा तु महानदीम् ।
सस्नौ तत्र ततश्चक्रे स्नानस्यानन्तरक्रियाः ॥

---

(१) शालग्रामे तदाख्ये स्थाने ।
(२) भगवति विष्णौ न्यस्तम् अर्पितं मानसं चित्तं येन ।
(३) परमां काष्ठाम् अत्यन्तमुत्कर्षम् ।
(४) देवक्रियाकृते देवपूजार्थम् ।
(५) निःसङ्गः विषयासक्तिशून्यः । योगतापसः योगरतस्तापसः ।

अथाजगाम तत्तीर्थं (१) जलं पातुं पिपासिता ।
आसन्नप्रसवा ब्रह्मन्नेकैव हरिणी वनात् ॥
ततः समभवत्तत्र पीतप्राये जले तया ।
सिंहस्य नादः सुमहान् सर्व्वप्राणिभयङ्करः ॥
ततः सा सहसा त्रासादाप्लुता निम्नगातटम् (२) ।
अत्युच्चारोहणेनास्या नद्यां गर्भः पपात ह ॥
तमुह्यमानं वेगेन वीचिमालापरिप्लुतम् ।
जग्राह स नृपो गर्भात् पतितं मृगपोतकम् ॥
गर्भप्रच्युतिदोषेण प्रोत्तुङ्गाक्रमणेन (३) च ।
मैत्रेय सापि हरिणी पपात च ममार च ॥
हरिणीं तां विलोक्याथ विपन्नां (४) नृपतापसः ।
मृगपोतं समादाय निजमाश्रममागतः ॥
चकारानुदिनञ्चासौ मृगपोतस्य वै नृपः ।
पोषणं पुष्यमाणश्च स तेन ववृधे मुने ॥
चचाराश्रमपर्य्यन्ते तृणानि गहनेषु सः (५) ।

---

(१) तत्तीर्थं तस्याः महानद्याः तीर्थम् अवतरणस्थानम् ।
(२) निम्नगातटं नदीतीरम् आप्लुता उत्पतिता आरूढेत्यर्थः ।
(३) प्रोत्तुङ्गाक्रमणेन अत्युच्चारोहणेन । (४) विपन्नां मृताम् ।
(५) स मृगः आश्रमपर्य्यन्ते आश्रमप्रान्ते स्थितेष्विति शेषः गहनेषु वनेषु तृणानि चचार भक्षयामास ।

दूरं गत्वा च शार्दूलत्रासादभ्याययौ पुनः ॥
प्रातर्गत्वातिदूरञ्च सायमायात्यथाश्रमम् ।
पुनश्च भरतस्याभूदाश्रमस्योटजाजिरे (१) ॥
तस्य तस्मिन् मृगे दूरसमीपपरिवर्त्तिनि ।
आसीच्चेतः समासक्तं न ययावन्यतो (२) द्विज ॥
विमुक्तराज्यतनयः प्रोज्झिताशेषबान्धवः ।
ममत्वं स चकारोच्चैस्तस्मिन् हरिणबालके ॥
किं वृकैर्भक्षितो व्याघ्रैः (३) किं सिंहेन निपातितः ।
चिरायमाणे (४) निष्क्रान्ते तस्यासीदिति मानसम् ॥
एषा वसुमती तस्य खुराग्रक्षतकर्वुरा (५) ।
प्रीतये मम जातोऽसौ क्व ममैणकबालकः (६) ॥
विषाणाग्रेण मद्बाहुकण्डूयनपरो हि सः ।
क्षेमेणाभ्यागतोऽरण्यादपि मां सुखयिष्यति ॥
एते लूनशिखास्तस्य दशनैरचिरोद्गतैः ।

---

(१) उटजः पर्णशाला तस्य अजिरे अङ्गणे ।
(२) अन्यतः अन्यस्मिन् विषये ।
(३) व्याघ्रैः व्याघ्रं र्वा भक्षितः ।
(४) चिरायमाणे आश्रमप्रतिनिवृत्तौ कृतविलम्बे ।
(५) खुराणामग्रेण यानि क्षतानि तैः कर्वुरा विविधवर्णा ।
(६) एणकबालकः हरिणशावकः ।

कुशाः काशा विराजन्ते वटवः सामगा इव (१) ॥
इत्थं चिरगते तस्मिन् स चक्रे मानसं मुनिः।
प्रीतः प्रसन्नवदनः पार्श्वस्थे चाभवन्मृगे ॥
समाधिभङ्गस्तस्यासीत् (२) तन्ममत्वाहितात्मनः (३)।
संत्यक्तराज्यभोगर्द्धिस्वजनस्यापि भूपतेः ॥
कालेन गच्छता (४) सोऽथ कालं चक्रे (५) महीपतिः।
पितेव सास्रं (६) पुत्त्रेण मृगपोतेन वीक्षितः ॥
मृगमेव तदाद्राक्षीत् त्यजन् प्राणानसावपि।
तन्मयत्वेन (७) मैत्रेय नान्यत् किञ्चिदचिन्तयत् ॥

---

(१) कुशाः काशाश्च तस्य हरिणशिशोः अचिरोद्गतैः अचिरोद्गतैः दशनैः दन्तैः लूनशिखाः छिन्नाग्राः सन्तः सामगाः सामवेदाध्यायिनो वटवः कुमारा इव विराजन्ते सामगा वटवो मुण्डितशिरसो भवन्तीति साधर्म्यम्।

(२) समाधिभङ्गः योगाभ्यासविच्छेदः।

(३) तस्मिन् हरिणशिशौ ममत्वं स्नेहः तन्ममत्वं तस्मिन् आहितः अर्पितः आत्मा चित्तं येन तस्य।

(४) कालेन गच्छता गच्छति काले।

(५) कालं चक्रे मृत्युं प्राप।

(६) सास्रं साश्रुनेत्रम्।

(७) तन्मयत्वेन तदेकाग्रचित्ततया।

—

# महाभारतम्

## परीक्षिदुपाख्यानम्

सौतिरुवाच ।

ततोऽपरस्मिन् सम्प्राप्ते काले कस्मिंश्चिदेव तु ।
परीक्षिन्नाम राजासीत् ब्रह्मन् (१) कौरववंशजः ॥
मृगान् विध्यन् वराहांश्च तरक्षून् (२) महिषांस्तथा ।
अन्यांश्च विविधान् वन्यांश्चचार (३) पृथिवीपतिः ॥
स कदाचिन्मृगं विद्ध्वा बाणेन निशितेन (४) वै ।
पृष्ठतो धनुरादाय ससार गहने वने ॥
परिश्रान्तः पिपासार्त्त आससाद मुनिं (५) वने ।
गवां प्रचारेष्वासीनं (६) वत्सानां मुखनिःसृतम् ।
भूयिष्ठमुपयुञ्जानं फेनमापिबतां पयः (७) ॥

---

(१) ब्रह्मन्निति शौनकसम्बोधनम् ।
(२) तरक्षुः क्षुद्रकायो व्याघ्रविशेषः ।
(३) वन्यान् वनचारिणो जन्तून् ।
(४) निशितेन तीक्ष्णाग्रेण ।
(५) मुनिं शमीकम् ।
(६) गवां प्रचारेषु गोचरणस्थानेषु यत्र गावश्चरन्तीत्यर्थः ।
(७) पय आपिबतां वत्सानां मुखनिःसृतं फेनं भूयिष्ठमुपयुञ्जानमित्यन्वयः उपयुञ्जानं पिबन्तम् ।

तमभिद्रुत्य (१) वेगेन स राजा संश्रितव्रतम् (२)।
अपृच्छदनुरुध्यैव तं मुनिं क्षुत्क्रमान्वितः (३)॥
भो भो ब्रह्मन्नहं राजा परीक्षिदभिमन्युजः।
मया विद्धो मृगो नष्टः कच्चित्तं दृष्टवानसि॥
स मुनिस्तं तु नोवाच किञ्चिन्मौनव्रते स्थितः।
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् (४)॥
समुत्क्षिप्य धनुष्कोट्या (५) स चैतत् समुपैक्षत (६)।
न च किञ्चिदुवाचैनं शुभं वा यदि वाशुभम्॥
स राजा क्रोधमुत्सृज्य व्यथितस्तं तथागतम् (७)।
दृष्ट्वा जगाम नगरमृषिस्त्वासीत्तथैव सः॥
न हि तं राजशार्दूलं क्षमाशीलो महामुनिः।

---

(१) अभिद्रुत्य अभिगम्य तदभिमुखं गत्वेत्यर्थः।
(२) संश्रितव्रतम् अवलम्बितमौनव्रतम्।
(३) क्षुधा क्षुधया श्रमेण च अन्वितः।
(४) समासजत् समासञ्जयत् योजयामास। अन्तर्भूतो ण्यर्थः।
(५) धनुष्कोट्या धनुषोऽग्रभागेण।
(६) स च मुनिः एतत् स्कन्धे सर्पयोजनं समुपैक्षत उपेक्षते स्म न तन्निमित्तं क्रोधवशी बभूवेति भावः।
(७) तथागतम् तादृशीमवस्थामापन्नं स्कन्धे न्यस्तसर्पमिति यावत्।

स्वधर्म्मनिरतं भूपं समाक्षिप्तोऽप्यधर्षयत् (१) ॥
न हि तं राजशार्दूलस्तथाधर्म्मपरायणम् ।
जानाति भरतश्रेष्ठस्तत एनमधर्षयत् ॥
तरुणस्तस्य पुत्त्रोऽभूत्तिग्मतेजा (२) महातपाः ।
शृङ्गी नाम महाक्रोधो दुष्प्रसादो (३) महाव्रतः ॥
सख्योक्तः क्रीड़मानेन (४) स तत्र हसता किल ।
ऋषिपुत्त्रेण नर्म्मार्थे (५) कृशेन द्विजसत्तम ॥
तेजस्विनस्तव पिता तथैव च तपस्विनः ।
शवं स्कन्धेन वहति मा शृङ्गिन् गर्व्वितो भव ॥
क्व ते पुरुषमानित्वं (६) क्व ते वाचस्तथाविधाः ।
दर्पजाः पितरं द्रष्टा यस्त्वं शवधरं तथा ॥

---

(१) समाक्षिप्तः स्कन्धे सर्पक्षेपेणावमानितः। न अधर्षयत् क्षमाशीलत्वात् शशापेत्यर्थः। स्वस्य क्षमाशीलत्वं राज्ञश्च स्वधर्म्मनिरतत्वमत्र हेतुः।
(२) तिग्मतेजाः अतितेजस्वी अन्यकृतामवमाननां न सहते इत्यर्थः।
(३) दुष्प्रसादः प्रसादयितुमशक्यः कुपितो न प्रसीदतीत्यर्थः।
(४) क्रीड़मानेन क्रीड़ता। आत्मनेपदमार्षम्।
(५) नर्म्म क्रीड़ा उपहास इति यावत्। तदर्थे शृङ्गिणमुपहसितुमित्यर्थः।
(६) पुरुषमानित्वं पुरुषाभिमानः।

एवमुक्तः स तेजस्वी शृङ्गी कोपसमन्वितः ।
मृतधारं गुरुं श्रुत्वा पर्य्यतप्यत मन्युना ॥
स तं कृशमभिप्रेक्ष्य सूनृतां वाचमुत्सृजन् ।
अपृच्छत्तं कथं तात स मेऽद्य मृतधारकः ॥

कृश उवाच ।

राज्ञा परीक्षिता तात मृगयां परिधावता (१) ।
अवसक्तः (२) पितुस्तेऽद्य मृतः स्कन्धे भुजङ्गमः ॥

शृङ्गी उवाच ।

किं मे पित्रा कृतं तस्य राज्ञोऽनिष्टं दुरात्मनः ।
ब्रूहि तत् कृश तत्त्वेन पश्य मे तपसो बलम् ॥

कृश उवाच ।

स राजा मृगयां (३) यातः परीक्षिदभिमन्युजः ।
ससार मृगमेकाकी विद्ध्वा बाणेन शीघ्रगम् ॥
न चापश्यन्मृगं राजा चरंस्तस्मिन् महावने ।
पितरं ते स दृष्ट्वैव पप्रच्छानभिभाषिणम् (४) ॥

---

(१) मृगयां परिधावता मृगयायै परिधावता मृगयार्थमरण्ये भ्राम्यता इत्यर्थः । आर्षः प्रयोगः ।
(२) अवसक्तः अवसञ्जितः निहित इत्यर्थः । अन्तर्भूतो ण्यर्थः ।
(३) मृगयां मृगयायै । आर्षः प्रयोगः ।
(४) अनभिभाषिणम् अकथयन्तं मौनव्रतधारिणमिति यावत् ।

तं स्थाणुभूतं तिष्ठन्तं (१) क्षुत्पिपासाश्रमातुरः ।
पुनः पुनर्मृगं नष्टं पप्रच्छ पितरं तव ॥
स च मौनव्रतोपेतो नैव तं प्रत्यभाषत ।
तस्य राजा धनुष्कोट्या सर्पं स्कन्धे समासजत् ॥
शृङ्गिंस्तव पिता सोऽपि तथैवास्ते धृतव्रतः ।
सोऽपि राजा स्वनगरं प्रस्थितो गजसाह्वयम् (२)॥
श्रुत्वैवमृषिपुत्त्रस्तु शवं स्कन्धे प्रतिष्ठितम् (३)।
कोपसंरक्तनयनः शशाप नृपतिं तदा ।
वार्य्युपस्पृश्य (४) तेजस्वी क्रोधवेगबलात्कृतः ॥
योऽसौ वृद्धस्य तातस्य तथाकृच्छ्रगतस्य (५) ह ।
स्कन्धे मृतं समासाक्षीत् पन्नगं राजकिल्बिषी (६)।
तं पापमतिसंक्रुद्धस्तक्षकः पन्नगेश्वरः ।
द्विजानामवमन्तारं कुरूणामयशस्करम् ।

---

(१) स्थाणुभूतं स्थाणुवन्निष्पन्दभावेनावतिष्ठमानम् । छिन्नशाखस्य वृक्षस्य स्कन्धः स्थाणुः ।

(२) गजसाह्वयं गजेन हस्तिना साह्वयं नामयुक्तं हस्तिनापुरमित्यर्थः ।

(३) पितुरिति शेषः ।

(४) वारि जलम् उपस्पृश्य स्पृष्ट्वा आचम्येति यावत् ।

(५) तथाकृच्छ्रगतस्य तादृशे कठोरव्रते स्थितस्य ।

(६) राजकिल्बिषी राजसु पातकी दुर्वृत्तो राजेति यावत् ।

सप्तरात्रादितो (१) नेता यमस्य सदनं प्रति ॥
इति श्रुत्वातिसंक्रुद्धः शृङ्गी पितरमभ्यगात् ।
आसीनं गोव्रजे तस्मिन् वहन्तं शवपन्नगम् (२) ॥
स तमालक्ष्य पितरं शृङ्गी स्कन्धगतेन वै ।
शवेन भुजगेनासीद् भूयः क्रोधसमाकुलः ॥
दुःखाच्चाश्रूणि मुमुचे पितरञ्चेदमब्रवीत् ।
श्रुत्वेमां धर्षणां (३) तात तव तेन दुरात्मना ।
राज्ञा परीक्षिता कोपादशपं तमहं नृपम् ॥
सप्तमेऽहनि तं पापं तक्षकः पन्नगोत्तमः ।
वैवस्वतस्य (४) सदनं नेता परमदारुणम् ॥
तमब्रवीत् पिता ब्रह्मंस्तथाकोपसमन्वितम् ।
न मे प्रियं कृतं तात नैष धर्मस्तपस्विनाम् ॥
वयं तस्य नरेन्द्रस्य विषये (५) निवसामहे (६) ।

---

(१) सप्तरात्रादितः इतः अस्मात् दिवसात् सप्तरात्रात् सप्तमीं रात्रिं प्राप्य सप्तमे दिने इति यावत् ।

(२) गोव्रजे गोप्रचारे । शवपन्नगं मृतं सर्पम् ।

(३) धर्षणाम् अभिमर्षम् अवमानतामिति यावत् ।

(४) विवस्वतः सूर्य्यस्य अपत्यं पुमान् वैवस्वतो यमः ।

(५) विषये देशे राज्ये इति यावत् ।

(६) निवसामहे निवसामः । आत्मनेपदमार्षम् ।

न्यायतो रक्षितास्तेन तस्य पापं न रोचये (१) ॥
यदि राजा न संरक्षेत् पीड़ा नः परमा भवेत् ।
न शक्नुयामश्चरितुं (२) धर्म्मं पुत्त्र यथासुखम् (३) ॥
रक्ष्यमाणा वयं तात राजभिर्धर्म्मदृष्टिभिः ।
चरामो विपुलं धर्म्मं तेषां भागोऽस्ति धर्म्मतः (४) ॥
अराजके जनपदे दोषा जायन्ति (५) वै सदा ।
उद्वृत्तं (६) सततं लोकं राजा दण्डेन शास्ति वै ॥
नोद्विग्नश्चरते (७) धर्म्मं नोद्विग्नश्चरते क्रियाम् ।
राज्ञा प्रतिष्ठितो धर्म्मो धर्म्मात् स्वर्गः प्रतिष्ठितः ॥
परीक्षित्तु विशेषेण यथास्य प्रपितामहः (८) ।
रक्षत्यस्मांस्तथा राज्ञा रक्षितव्याः प्रजा विभो (९) ।
तेनेह क्षुधितेनाद्य श्रान्तेन च तपस्विना (१०) ।

---

(१) पापम् अनिष्टम् । न रोचये नेच्छामि ।
(२) चरितुम् अनुष्ठातुम् । (३) यथासुखम् इच्छानुरूपम् ।
(४) अस्माभिश्चरिते धर्म्मे इति शेषः । धर्म्मतः न्यायतः ।
(५) जायन्ति जायन्ते । परस्मैपदमार्षम् ।
(६) उद्वृत्तम् उच्छृङ्खलम् असत्पथप्रवृत्तमिति यावत् ।
(७) उद्विग्नः उपद्रुतः । चरते चरति । आत्मनेपदमार्षम् ।
(८) यथास्य प्रपितामहः अस्य प्रपितामहः पाण्डुरिव ।
(९) विभो निग्रहानुग्रहसमर्थः ।
(१०) तपस्विना तपस्विसदृशेन सर्व्वथा निरपराधेनेत्यर्थः ।

अजानता कृतं मन्ये व्रतमेतदिदं मम (१) ॥
कस्मादिदं त्वया बाल्यात् सहसा दुष्कृतं कृतम् ।
न सोऽर्हति नृपः शापमस्मत्तः पुत्त्र सर्व्वथा ॥

शृङ्गी उवाच ।

यद्येतत् साहसं (२) तात यदि वा दुष्कृतं कृतम् ।
प्रियं वाप्यप्रियं वा ते वागुक्ता (३) न मृषा भवेत् ॥
नैवान्यथेदं भविता पितरेष ब्रवीमि ते ।
नाहं मृषा ब्रवीम्येव स्वैरेष्वपि (४) कुतः शपन् ॥

शमीक उवाच ।

जानाम्युग्रप्रभावं त्वां तात सत्यगिरं तथा ।
नानृतं चोक्तपूर्व्वं ते (५) नैतन्मिथ्या भविष्यति ॥
पित्रा पुत्त्रो वयःस्थोऽपि सततं वाच्य (६) एव तु ।
किं पुनर्ब्बाल एव त्वं तपसा भावितः सदा (७) ॥

---

(१) मम इदं व्रतम् अजानता तेन एतत् कृतं मन्ये इत्यन्वयः ।
(२) साहसम् असमीक्ष्यकारित्वम् ।
(३) मयेति शेषः ।
(४) स्वैरेषु परिहासजल्पितेषु ।
(५) ते त्वया आर्षः प्रयोगः ।
(६) वाच्यः शिक्षणीयः ।
(७) सदा तपसा भावितः तपस्येव निरतः लोकव्यवहारानभिज्ञ इति यावत् ।

सोऽहं पश्यामि वक्तव्यं त्वयि धर्म्मभृतां वर।
पुत्त्रत्वं बालताञ्चैव तवावेक्ष्य च साहसम्॥
स त्वं शमपरो भूत्वा वन्यमाहारमाचरन्।
चर क्रोधमिमं हित्वा नैवं धर्म्मं प्रहास्यसि (१)॥
क्रोधो हि धर्म्मं हरति यतीनां दुःखसञ्चितम्।
शम एव यतीनां हि क्षमिणां सिद्धिकारकः॥
क्षमावतामयं लोकः परश्चैव क्षमावताम्।
तस्माच्चरेथाः (२) सततं क्षमाशीलो जितेन्द्रियः॥

---

## ययात्युपाख्यानम्।

क्रुद्धेनोशनसा (३) शप्तो ययातिर्नाहुषस्तदा (४)।
पूर्व्वं वयः (५) परित्यज्य जरां सद्योऽन्वपद्यत॥

---

(१) एवम् इत्यमनुष्ठिते सति धर्म्मं न प्रहास्यसि न त्यक्ष्यसि धर्म्मेण हीनो न भविष्यसीत्यर्थः।

(२) चरेथाः चरेः। आत्मनेपदमार्षम्।

(३) उशनसा शुक्राचार्य्येण।

(४) नहुषस्य अपत्यं पुमान् नाहुषः।

(५) पूर्व्वं वयः यौवनम्।

ययातिरुवाच।

अतृप्तो यौवनस्याहं ध्रुवं भृगुकुलोद्वह (१)।
प्रसादं कुरु मे ब्रह्मन् जरा मां न विशेद्यथा॥

शुक्र उवाच।

नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप।
जरां त्वेतां त्वमन्यस्मिन् संक्रामय यदीच्छसि॥

ययातिरुवाच।

राज्यभाक् स भवेद्ब्रह्मन् पुण्यभाक् कीर्त्तिभाक् तथा।
यो मे दद्याद्वयः (२) पुत्रस्तद्भवाननुमन्यताम्॥

शुक्र उवाच।

संक्रामयिष्यसि जरां यथेष्टं नहुषात्मज।
मामनुध्याय भावेन (३) न च पापमवाप्स्यसि (४)॥
वयो दास्यति ते पुत्रो यः स राजा भविष्यति।
आयुष्मान् कीर्त्तिमांश्चैव बह्वपत्यस्तथैव च॥

जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव हि।
पुत्रं ज्येष्ठं वरिष्ठञ्च (५) यदुमित्यब्रवीद्वचः।

---

(१) उद्वह: श्रेष्ठ: अग्रगण्यो वा।
(२) वय: स्वयौवनम्।
(३) भावेन भक्त्या।
(४) पापं भोगतृष्णया पुत्रे जरासंक्रामणनिबन्धनं दोषम्।
(५) वरिष्ठं गुणै: श्रेष्ठम्।

जरा वली च मां तात पलितानि (१) च पर्य्यगुः (२)।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने (३)॥
त्वं यदो प्रतिपद्यस्व पाप्मानं (४) जरया सह ।
यौवनेन त्वदीयेन चरेयं (५) विषयानहम् ॥
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा स्वं प्रतिपत्स्यामि (६) पाप्मानं जरया सह ॥

यदुरुवाच ।

जरायां बहवो दोषाः पानभोजनकारिताः ।
तस्माज्जरां न ते राजन् ग्रहीष्य इति मे मतिः ॥
सितश्मश्रुर्निरानन्दो जरया शिथिलीकृतः ।
वलीसङ्गतगात्रस्तु दुर्द्दर्शो दुर्बलः कृशः ॥
अशक्तः कार्य्यकरणे परिभूतः सयौवनैः ।
सहोपजीविभिश्चैव तां जरां नाभिकामये (७) ॥

---

(१) जरया केशानां शौक्ल्यं पलितम् ।
(२) पर्य्यगुः परिप्राप्तानि ।
(३) यौवने यौवनसाध्ये विषयभोगे ।
(४) पाप्मानं पापं जराजनितक्लेशप्रपञ्चरूपमशुभम् ।
(५) चरेयम् उपभुञ्जीय ।
(६) प्रतिपत्स्यामि प्रतिपत्स्ये । परस्मैपदमार्षं म् ।
(७) दुर्द्दर्शः विकृतरूपः । परिभूतः अवज्ञातः । सयौवनैः युवभिः । सहो-
पजीविभिः अनुचरैः ।

सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप।
जरां ग्रहीतुं धर्मज्ञ तस्मादन्यं वृणीष्व (१) वै॥

ययातिरुवाच।

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि।
तस्मादराज्यभाक् तात प्रजा तव भविष्यति॥
तुर्व्वसो प्रतिपद्यस्व पाप्मानं जरया सह।
यौवनेन चरेयं वै विषयांस्तव पुत्रक॥
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम्।
स्वञ्चैव प्रतिपत्स्यामि (२) पाप्मानं जरया सह॥

तुर्व्वसुरुवाच।

न कामये जरां तात कामभोगप्रणाशिनीम् (३)।
बलरूपान्तकरणीं बुद्धिप्राणप्रणाशिनीम्॥

ययातिरुवाच।

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि।
तस्मात् प्रजा समुच्छेदं तुर्व्वसो तव यास्यति॥
एवं स तुर्व्वसुं शप्त्वा ययातिः सुतमात्मनः।
शर्म्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत्॥

---

(१) वृणीष्व प्रार्थयस्व।
(२) प्रतिपत्स्ये परस्मैपदमार्षम्।
(३) काम्यन्त इति कामाः विषयाः।

द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् ।
जरां वर्षसहस्रं मे यौवनं स्वं ददस्व च ॥
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चादास्यामि (१) भूयोऽहं पाप्मानं जरया सह ।

द्रुह्युरुवाच ।

न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् ।
वाग्भङ्गश्चास्य भवति तां जरां नाभिकामये ॥

ययातिरुवाच ।

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मात् द्रुह्यो प्रियः कामो न ते सम्पत्स्यते क्वचित्
अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
एकं वर्षसहस्रन्तु चरेयं यौवनेन ते ॥

अनुरुवाच ।

जीर्णः शिशुवदादत्तेऽकालेऽन्नमशुचिर्यथा ।
न जुहोति च कालेऽग्निं तां जरां नाभिकामये ॥

ययातिरुवाच ।

यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
जरादोषस्त्वयोक्तो यत् तस्मात्त्वं (२) प्रतिलप्स्यसे ॥
प्रजाश्च यौवनं प्राप्ता विनशिष्यन्त्यनो तव ॥

---

(१) आदास्यामि आदास्ये । परस्मैपदमार्षम् ।
(२) तं जरादोषम् ।

पूरो त्वं मे प्रियः पुत्रस्त्वं वरीयान् भविष्यसि ।
जरा वली च मां तात पलितानि च पर्य्यगुः ॥
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ।
पुरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ॥
एवमुक्तः प्रत्युवाच पुरुः पितरमञ्जसा (१) ।
यथात्थ मां महाराज तत् करिष्यामि ते वचः ॥
प्रतिपत्स्यामि ते राजन् पाप्मानं जरया सह ।
गृहाण यौवनं मत्तश्चर कामान् यथेप्सितान् ॥
जरसाहं प्रतिच्छन्नो (२) वयोरूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथात्थ माम् ॥

ययातिरुवाच ।

पुरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते ।
सर्व्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥
एवमुक्त्वा ययातिस्तु स्मृत्वा काव्यं महातपाः ।
संक्रामयामास जरां तदा पूरौ महात्मनि ॥
पौरवेणाथ वयसा ययातिर्नहुषात्मजः ।
प्रीतियुक्तो नृपश्रेष्ठश्चचार विषयान् प्रियान् ।
यथाकामं यथोत्साहं यथाकालं यथासुखम् ॥

---

(१) अञ्जसा झटिति क्षणमप्यविलम्बमान इत्यर्थः।
(२) प्रतिच्छन्नः आवृतः अभिभूत इति यावत् ।

धर्म्मेण च प्रजा सर्व्वाः यथावदनुरञ्जयन् ।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥
स राजा सिंहविक्रान्तो युवा विषयगोचरः (१) ।
अविरोधेन धर्म्मस्य चचार सुखमुत्तमम् ॥
स सम्प्राप्य शुभान् कामांस्तृप्तः खिन्नश्च (२) पार्थिव
कालं वर्षसहस्रान्तं सस्मार मनुजाधिपः ॥
यदा स पश्यते (३) कालं धर्म्मात्मा तं महीपतिः ।
पूर्णं मत्वा ततः (४) कालं पूरुं पुत्त्रमुवाच ह ॥
यथाकामं यथोत्साहं यथाकालमरिन्दम ।
सेविता विषयाः पुत्त्र यौवनेन मया तव ॥
न जातु कामः कामानामुपभोगेन शाम्यति (५)
हविषा कृष्णवर्त्मेव भूय (६) एवाभिवर्द्धते ॥
यत् पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्य्याप्तं तस्मात्तृष्णां परित्यजेत् ॥

---

(१) विषयगोचरः विषयासक्तः विषयभोगरत इति यावत् ।
(२) खिन्नः श्रान्तः भोगे निरुत्साह इति यावत् ।
(३) पश्यते अपश्यत् । आत्मनेपदवर्त्तमानप्रयोगावार्षौ ।
(४) ततः तदा ।
(५) कामः विषयाभिलाषः । कामानां विषयाणां भोग्यवस्तूनां यावत् ।
(६) भूयः अधिकतरम् ।

या दुस्त्यजा दुर्मतिभिर्या न जीर्य्यति जीर्य्यतः ।
यासौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः(१)सुखम् ।
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाप्यनुदिनं तृष्णा ममैतेष्वभिजायते ॥
तस्मादेनामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो (२) भूत्वा चरिष्यामि मृगैः सह ॥
पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम् ।
राज्यञ्चेदं गृहाण त्वं त्वं हि मे प्रियकृत् सुतः ॥
प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा ।
प्रत्यपद्यत पूरुश्च यौवनं पुनरात्मनः ॥
अभिषेक्तुकामं नृपतिं (३) पूरुं पुत्त्रं कनीयसम् (४) ।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥
कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ।
ज्येष्ठं यदुमतिक्रम्य राज्यं यच्छसि पूरवे ॥
यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्व्वसुः ।

---

(१) प्राणान्तिको रोगः प्राणान्तं यावत् तिष्ठतीत्यर्थः तथाच तृष्णा यावज्जीवमविच्छेदेन क्लेशकारीति भावः ।
(२) निर्द्वन्द्वः सुखदुःखरागद्वेषादिद्वन्द्वैरनभिभूतः । निर्ममः ममताशून्यः सांसारिकेषु विषयेषु वीतस्पृह इति यावत् ।
(३) पादेऽस्मिन् वर्णाधिक्यमार्षम् ।
(४) कनीयसम् । आर्षः प्रयोगः । कनीयांसमिति लौकिकः ।

शर्म्मिष्ठायाः सुतो द्रुह्युस्ततोऽनुः पूरुरेव च ।
कथं ज्येष्ठानतिक्रम्य कनीयान् राज्यमर्हति ।
एतत् सम्बोधयामस्त्वां धर्म्मं त्वं प्रतिपालय ॥

ययातिरुवाच ।

ब्राह्मणप्रमुखा वर्णाः सर्व्वे शृण्वन्तु मे वचः ।
ज्येष्ठं प्रति यथा (१) राज्यं न देयं मे कथञ्चन ॥
मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।
प्रतिकूलः पितुर्यश्च न स पुत्त्रः सतां मतः ॥
मातापित्रोर्वचनकृद्धितः पथ्यश्च (२) यः सुतः ।
स पुत्त्रः पुत्त्रवद्यश्च वर्त्तते पितृमातृषु (३) ॥
यदुनाहमवज्ञातस्तथा तुर्व्वसुनापि च ।
द्रुह्युणा चानुना चैव मय्यवज्ञा कृता भृशम् ॥
पूरुणा तु कृतं वाक्यं मानितञ्च विशेषतः ।
कनीयान् मम दायादो धृता येन जरा मम ॥
शुक्रेण च वरो दत्तः काव्येनोशनसा स्वयम् ।

---

(१) यथा येन हेतुना ।

(२) हितः हितकारी । पथ्यः अनुकूलकारी सत्पथप्रतिपन्नो वा ।

(३) पितृमातृषु पितृमातृस्थानीयेषु पितृस्थानीयाः पितृव्यादयः मातृस्थानीयाः मातृष्वस्रादयः तेषु यः पुत्त्रवत् वर्त्तते पुत्त्र इव आचरति ।

पुत्रो यस्त्वानुवर्त्तेत स राजा पृथिवीपतिः ।
भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम् ॥

प्रकृतयः ऊचुः ।

यः पुत्रो गुणसम्पन्नो मातापित्रोर्हितः सदा ।
सर्व्वमर्हति कल्याणं कनीयानपि सत्तमः ॥
अर्हः पूरुरिदं राज्यं (१) यः सुतः प्रियकृत्तव ।
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् (२) ॥
पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा ।
अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मनः ॥
दत्त्वा च पूरवे राज्यं वनवासाय दीक्षितः (३) ।
पुरात् स निर्ययौ राजा ब्राह्मणैस्तापसैः सह ।

---

## जतुगृहदाहः ।

वैशम्पायन उवाच ।

शृणु विस्तरशो राजन् (४) वदतो मे परन्तप ।
दाहं जतुगृहस्यास्मात् पाण्डवानाञ्च मोक्षणम् ॥

---

(१) इदं राज्यम् अस्य राज्यस्य । आर्षः प्रयोगः ।
(२) भवदुक्तस्येति शेषः ।
(३) दीक्षितः कृतसङ्कल्पः ।
(४) राजन्निति जनमेजयसम्बोधनम् ।

प्राणाधिकं (१) भीमसेनं कृतविद्यं धनञ्जयम् ।
दुर्य्योधनो लक्षयित्वा पर्य्यतप्यत दुर्मनाः ॥
ततो वैकर्त्तनः (२) कर्णः शकुनिश्चापि सौबलः (३)।
अनेकैरभ्युपायैस्ते (४) जिघांसन्ति स्म पाण्डवान् ॥
पाण्डवा अपि तत् सर्व्वं प्रतिचक्रुर्यथागतम् (५)।
उद्भावनमकुर्व्वन्तो (६) विदुरस्य मते स्थिताः ॥
गुणैः समुदितान् (७) दृष्ट्वा पौराः पाण्डुसुतांस्तदा।
कथयाञ्चक्रिरे तेषां गुणान् संसत्सु भारत ॥
प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः (८)।
राज्यं न प्राप्तवान् पूर्व्वं स कथं नृपतिर्भवेत् ॥
तथा शान्तनवो भीष्मः सत्यसन्धो महाव्रतः।
प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥
ते वयं पाण्डवज्येष्ठं तरुणं वृद्धशीलिनम्।

---

(१) प्राणेन बलेन अधिकं महाबलमित्यर्थः।
(२) विकर्त्तनः सूर्य्यः तस्य अपत्यं पुमान् वैकर्त्तनः।
(३) सौबलः सुबलतनयः शकुनिविशेषणम्।
(४) ते कर्णशकुनिदुर्य्योधनाः।
(५) यथागतं यथोपस्थितम्।
(६) केन प्रतिक्रियते इत्येतदप्रकाशयन्तः।
(७) समुदितान् पूर्णान् अलङ्कृतानित्यर्थः।
(८) प्रज्ञा बुद्धिरेव चक्षुर्यस्य सः। अचक्षुष्ट्वात् जन्मान्धत्वात्।

अभिषिञ्चाम साध्वद्य सत्यारुणवेदिनम् ॥
स हि भीष्मं शान्तनवं धृतराष्ट्रञ्च धर्मवित् ।
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ॥
तेषां दुर्य्योधनः श्रुत्वा तानि वाक्यानि जल्पताम् ।
युधिष्ठिरानुरक्तानां पर्य्यतप्यत दुर्मतिः ॥
स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे ।
ईर्ष्यया चापि सन्तप्तो धृतराष्ट्रमुपागमत् ॥
ततो विरहितं (१) दृष्ट्वा पितरं परिपूज्य सः ।
पौरानुरागसन्तप्तः पश्चादिदमभाषत ॥
श्रुत्वा मे (२) जल्पतां तात पौराणामशिवा गिरः ।
त्वामनादृत्य भीष्मञ्च पतिमिच्छन्ति पाण्डवम् ॥
मतमेतच्च भीष्मस्य न स राज्यं बुभुक्षति ।
अस्माकन्तु परां पीड़ां चिकीर्षन्ति पुरे जनाः ॥
पितृतः प्राप्तवान् राज्यं पाण्डुरात्मगुणैः पुरा ।
त्वमन्धगुणसंयोगात् (३) प्राप्तं राज्यं न लब्धवान् ॥
स एष पाण्डोर्दायाद्यं (४) यदि प्राप्नोति पाण्डवः ।

---

(१) विरहितम् अनुचरादिरहितम् एकाकिनमित्यर्थः ।
(२) मे मया आर्षः प्रयोगः ।
(३) अन्धगुणः अन्धत्वरूपी धर्मः ।
(४) दायादाः उत्तराधिकारिणः तैर्लब्धं दायाद्यम् पाण्डुना उत्तराधिकारितया लब्धं राज्यमिति यावत् ।

तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्यापि चात्मजः ॥
ते वयं राजवंशेन हीनाः सह सुतैरपि ।
अवज्ञाता भविष्यामो लोकस्य जगतीपते ॥
सततं निरयं (१) प्राप्ताः परपिण्डोपजीविनः ।
न भवेम यथा राजंस्तथा नीतिर्विधीयताम् ॥
एवं श्रुत्वा तु पुत्रस्य प्रज्ञाचक्षुर्नराधिपः ।
धृतराष्ट्रो द्विधाचित्तः (२) शोकार्त्तः समपद्यत ॥
दुर्य्योधनश्च कर्णश्च शकुनिः सौबलस्तथा ।
दुःशासनचतुर्थास्ते मन्त्रयामासुरेकतः (३) ॥
ततो दुर्य्योधनो राजा धृतराष्ट्रमभाषत ।
पाण्डवेभ्यो भयं न स्यात्तान् विवासयतां भवान् ।
निपुणेनाभ्युपायेन नगरं वारणावतम् ॥
धृतराष्ट्रस्तु पुत्रेण श्रुत्वा वचनमीरितम् ।
मुहूर्त्तमिव सञ्चिन्त्य दुर्य्योधनमथाब्रवीत् ॥
धर्म्मनित्यः सदा पाण्डुस्तथा धर्म्मपरायणः ।
सर्व्वेषु ज्ञातिषु तथा मयि त्वासीद्विशेषतः (४) ॥

---

(१) निरयम् अवमाननारूपं नरकम् ।
(२) द्विधाचित्तः दोलायमानचित्तः किंकर्त्तव्यविमूढ़ इति यावत् ।
(३) एकतः एकान्ते विजने इति यावत् ।
(४) पाण्डुः सदा धर्म्मनित्यः तथा धर्म्मपरायणः सर्व्वेषु ज्ञातिषु विशेषतः

तस्य पुत्रो यथा पाण्डुस्तथा धर्म्मपरायणः।
गुणवान् लोकविख्यातः पौरवाणां सुसम्मतः (१)॥
स कथं शक्यतेऽस्माभिरपाकर्त्तुं (२) बलादितः।
पितृपैतामहाद्राज्यात् ससहायो विशेषतः॥
भृता (३) हि पाण्डुनामात्या बलञ्च (४) सततं भृतम्।
भृताः पुत्राश्च पौत्राश्च तेषामपि (५) विशेषतः॥
ते पुरा सत्कृतास्तात पाण्डुना नागरा जनाः।
कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान्॥

दुर्य्योधन उवाच।

तात प्रकृतयः सर्व्वा अर्थमानेन पूजिताः।
ध्रुवमस्मत्सहायास्ता भविष्यन्ति प्रधानतः (६)॥

---

मयि तथा धर्म्मपरायण आसीदित्यन्वयः। धर्म्मनित्यः धर्म्मे नित्यः स्थिरः केनापि हेतुना धर्म्ममार्गान्न व्यचलदिति यावत्। धर्म्मपरायण न्यायवान् सर्व्वत्र समदर्शीति यावत्।

(१) सुसम्मतः बहुमतः सविशेषानुरागभाजनमिति यावत्।
(२) अपाकर्त्तुं निराकर्त्तुं विवासयितुमिति यावत्।
(३) भृताः धनमानादिना पुष्टाः।
(४) बलं सेना सैनिकपुरुषाः सेनापतयश्चेति यावत्।
(५) तेषाम् अमात्यानां सेनापतीनां सैनिकपुरुषाणाञ्च।
(६) प्रधानतः प्रधानानि प्रधानानि प्रकृतयः प्रकृतिमुख्या इत्यर्थः।

स भवान् पाण्डवानाशु विवासयितुमर्हति ।
मृदुनैवाभ्युपायेन नगरं वारणावतम् ॥
यदा प्रतिष्ठितं राज्यं मयि राजन् भविष्यति ।
तदा कुन्ती सहापत्या पुनरेष्यति भारत ॥

धृतराष्ट्र उवाच ।

दुर्य्योधन ममाप्येतद्हृदि संपरिवर्त्तते ।
अभिप्रायस्य पापत्वान्नैवं (१) तु विवृणोम्यहम् ॥
न च भीष्मो न च द्रोणो न च क्षत्ता (२) न गौतमः(३) ।
विवास्यमानान् कौन्तेयाननुमंस्यन्ति कर्हिचित् ॥
समा हि कौरवेयाणां (४) वयं ते चैव पुत्रक ।
नैते विषममिच्छेयुर्धर्म्मयुक्ता मनस्विनः ॥
ते वयं कौरवेयाणामेतेषाञ्च महात्मनाम् (५) ।
कथं न वध्यतां तात गच्छेम जगतस्तथा ॥

---

(१) पापत्वात् धर्म्मबहिर्भूतत्वात् ।
(२) क्षत्ता दासीपुत्त्रः विदुर इति यावत् तस्य दासीगर्भोत्पन्नत्वात् ।
(३) गौतमः गौतमकुलोत्पन्नः कृपाचार्य्यः ।
(४) कौरवेयाणां भीष्मादीनाम् ।
(५) एतेषाञ्च महात्मनां द्रोणादीनाम् ।

दुर्य्योधन उवाच ।

मध्यस्थः (१) सततं भीष्मो द्रोणपुत्त्रो मयि स्थितः (२) ।
यतः पुत्त्रस्ततो द्रोणो भविता नात्र संशयः ॥
कृपः शारद्वतश्चैव (३) यत एतौ ततो भवेत् ।
द्रोणञ्च भागिनेयञ्च न स त्यक्ष्यति कर्हिचित् ॥
क्षत्तार्थबद्धस्त्वस्माकं (४) प्रच्छन्नं संयतः परैः (५) ।
न चैकः स समर्थोऽस्मान् पाण्डवार्थेऽभिवाधितुम् ॥
न चैकः स समर्थोऽस्मान् सह मात्रा विवासय ।
वारणावतमद्यैव यथा यान्ति (७) तथा कुरु ॥
विनिद्रकरणं (८) घोरं हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूतं कर्म्मणैतेन नाशय ॥

---

(१) मध्यस्थः समदर्शी न कमपि पक्षं विशेषेणानुगृह्णातीत्यर्थः ।

(२) मयि स्थितः मत्पक्षे स्थितः मयि एकान्तमनुरक्त इत्यर्थः ।

(३) शरद्वतोऽपत्यं पुमान् शारद्वतः ।

(४) अर्थबद्धः अर्थेन धनेन बद्धः ग्रासाच्छादनार्थमस्माकमर्थं गृह्णाति अतस्तस्यास्मत्पक्षावलम्बनं दुष्परिहरमिति भावः ।

(५) परैः विपक्षैः पाण्डवैरिति यावत् प्रच्छन्नम् अप्रकाशं संयतः बद्धः विदुरः प्रच्छन्नभावेन पाण्डवपक्षपातीत्यर्थः ।

(६) सुविस्रब्धम् अतिविश्वस्तं सर्व्वथा निःशङ्कमिति यावत् ।

(७) मात्रा सह पाण्डवा इति शेषः ।

(८) विनिद्रकरणं निद्राप्रतिरोधकम् ।

ततो दुर्य्योधनो राजा सर्व्वाः प्रकृतयः (१) शनैः ।
अर्थमानप्रदानेन संजहार (२) सहानुजः ॥
धृतराष्ट्रप्रयुक्तास्ते केचित् कुशलमन्त्रिणः (३) ।
कथयाञ्चक्रिरे रम्यं नगरं वारणावतम् (४) ॥
कथ्यमाने तथा रम्ये नगरे वारणावते ।
गमने पाण्डुपुत्त्राणां जज्ञे तत्र मतिर्नृप ॥
यदा त्वमन्यत नृपो जातकौतूहला इति (५) ।
उवाच चैतानथ तान् पाण्डवानम्बिकासुतः ॥
ममैते पुरुषा नित्यं कथयन्ति पुनः पुनः ।
रमणीयतमं लोके नगरं वारणावतम् ॥
तत्ताता (६) यदि मन्यध्वमुत्सवं वारणावते ।
सगणाः सान्वयाश्चैव (७) विहरध्वं यथामराः ॥
कञ्चित् कालं विहृत्यैवमनुभूय परां मुदम् ।
इदं वै हास्तिनपुरं सुखिनः पुनरेष्यथ ॥

---

(१) प्रकृतयः प्रकृतीः । आर्षः प्रयोगः ।
(२) संजहार वशीचकार स्वपक्षं ग्राहयामासेत्यर्थः ।
(३) कुशलमन्त्रिणः कुशलाः चतुराः मन्त्रिणः कार्य्यसहायाः ।
(४) वारणावतं नगरमतिरम्यं स्थानमिति कथयामासुः ।
(५) जातकौतूहलाः गमने जातोत्सुक्याः पाण्डवा इति शेषः ।
(६) ताताः वत्साः ।
(७) सगणाः भृत्यवर्गसहिताः । सान्वयाः अनुचरवर्गसहिताः ।

धृतराष्ट्रस्य तं काममनुबुद्ध्वा (१) युधिष्ठिरः ।
आत्मनश्चासहायत्वं तथेति (२) प्रत्युवाच तम् ॥
ततो भीष्मं शान्तनवं विदुरञ्च महामतिम् ।
द्रोणञ्च वाह्लिकञ्चैव सोमदत्तञ्च कौरवम् ।
कृपमाचार्य्यपुत्त्रञ्च भूरिश्रवसमेव च ।
माान्यानन्यानमात्यांश्च ब्राह्मणांश्च तपोधनान् ।
पुरोहितांश्च पौरांश्च गान्धारीञ्च यशस्विनीम् ।
युधिष्ठिरः शनैर्दीन उवाचेदं वचस्तदा ॥
रमणीये जनाकीर्णे नगरे वारणावते ।
सगणास्तत्र यास्यामो धृतराष्ट्रस्य शासनात् (३) ॥
प्रसन्नमनसः सर्व्वे पुण्या वाचो विमुञ्चत (४)
आशीर्भिर्वृंहितानस्मान्न पापं प्रसहिष्यते (५) ॥
एवमुक्तास्तु ते सर्व्वे पाण्डुपुत्त्रेण कौरवाः ।
प्रसन्नवदना भूत्वा अन्ववर्त्तन्त (६) पाण्डवान् ॥

---

(१) अनुबुद्ध्वा अनुबुध्य । आर्षः प्रयोगः ।
(२) तथेति तथा करिष्यामीति ।
(३) शासनात् आदेशात् ।
(४) पुण्याः शुभाः वाचः आशीर्वचनानि विमुञ्चत प्रयुङ्ग्ध्वम् ।
(५) भवताम् आशीर्भिः वृंहितान् वर्द्धितान् अस्मान् पापम् अशुभं न प्रसहिष्यते नाभिभविष्यति ।
(६) अन्ववर्त्तन्त अनुमोदितवन्तः ।

स्वस्त्यस्तु वः पथि सदा भूतेभ्यश्चैव सर्व्वशः (१)।
मा च वोऽस्त्वशुभं किञ्चित् सर्व्वदा पाण्डुनन्दनाः॥
ततः कृतस्वस्त्ययना राज्यलम्भाय पार्थिवाः।
कृत्वा सर्व्वाणि कार्य्याणि प्रययुर्वारणावतम् (२)॥
एवमुक्तेषु राज्ञा (३) तु पाण्डुपुत्त्रेषु भारत।
दुर्य्योधनः परं हर्षमगच्छत् स दुरात्मवान् (४)॥
स पुरोचनमेकान्तमानीय भरतर्षभ (५)।
गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत्॥
ममेयं वसुसम्पूर्णा पुरोचन वसुन्धरा।
यथेयं मम तद्वत्ते स तां रक्षितुमर्हसि॥
न हि मे कश्चिदन्योऽस्ति विश्वासिकतरस्त्वया।
सहायो येन सन्धाय मन्त्रयेय यथा त्वया॥
स रक्ष तात मन्त्रञ्च सपत्नांश्च समोद्धर (६)।

---

(१) सर्व्वशः सर्व्वेभ्यः।
(२) प्रययुः प्रयातुमुद्युक्ता बभूवुः।
(३) राज्ञा धृतराष्ट्रेण।
(४) दुरात्मवान् दुरात्मा।
(५) भरतर्षभ भरतश्रेष्ठ जनमेजयसम्बोधनम्।
(६) मन्त्रं मन्त्रणं रक्ष मा प्रकाशय मम सपत्नान् शत्रून् पाण्डवानिति या निपुणेन अभ्युपायेन उद्धर उन्मूलय समूलघातं जहीत्यर्थः।

निपुणेनाभ्युपायेन यद् ब्रवीमि तथा कुरु ॥
पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम् ।
उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात् ॥
स त्वं रासभयुक्तेन (१) स्यन्दनेनाशुगामिना ।
वारणावतमद्यैव यथा यासि तथा कुरु ॥
तत्र गत्वा चतुःशालं गृहं (२) परमसंवृतम् (३) ।
नगरोपान्तमाश्रित्य कारयेथा महाधनम् (४) ॥
शणसर्ज्जरसादीनि (५) यानि द्रव्याणि कानिचित् ।
आग्नेयान्युत (६) सन्तीह तानि तत्र प्रदापय ॥
सर्पिस्तैलवसाभिश्च (७) लाक्षया चाप्यनल्पया ।
मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु (८) दापय ॥
शणं तैलं घृतञ्चैव जतु दारूणि चैव हि ।
तस्मिन् वेश्मनि सर्व्वाणि निक्षिपेथाः समन्ततः ॥

---

(१) रासभाः रासभेभ्यो वडवासु जाता अश्वविशेषाः तैर्युक्तेन रासभैराकृष्टेनेति यावत् ।

(२) चतुःशालं गृहं गृहचतुष्टयात्मकं भवनम् ।

(३) परमसंवृतम् अतिगुप्तम् ।

(४) महाधनं बहुधनं धनपूर्णमिति यावत् ।

(५) सर्ज्जरसः सालनिर्य्यासः धुना इति भाषा ।

(६) आग्नेयानि अग्न्युद्दीपकानि ।

(७) वसा मेदः चर्वि इति भाषा ।

(८) कुड्येषु भित्तिषु ।

यथा च तन्न पश्येरन् (१) परीक्षन्तोऽपि (२) पाण्डवाः ।
आग्नेयमिति तत् कार्य्यमपि चान्येऽपि मानवाः (३) ॥
वेश्मन्येवं कृते तत्र गत्वा तान् परमार्चितान् ।
वासयेथाः पाण्डवेयान् कुन्तीञ्च ससुहृज्जनाम् ॥
आसनानि च दिव्यानि यानानि शयनानि च ।
विधातव्यानि पाण्डूनां यथा तुष्येत (४) वै पिता ॥
ज्ञात्वा च तान् सुविश्वस्तान् शयानानकुतोभयान् (५) ।
अग्निस्त्वया ततो देयो द्वारतस्तस्य (६) वेश्मनः ॥
स तथेति प्रतिज्ञाय कौरवाय (७) पुरोचनः ।
प्रायाद्रासभयुक्तेन स्यन्दनेनाशुगामिना ॥
स गत्वा त्वरितं राजन् (८) दुर्य्योधनमते स्थितः ।
यथोक्तं राजपुत्रेण सर्व्वं चक्रे पुरोचनः ॥

---

(१) पश्येरन् पश्येयुः । आत्मनेपदमार्षम् ।
(२) परीक्षन्तः परीक्षमाणाः । परस्मैपदमार्षम् ।
(३) यथा च पाण्डवाः अन्ये च मानवाः परीक्षन्तोऽपि तत् चतुःशाल भवनम् आग्नेयमिति न पश्येरन् नावबुध्येरन् तदपि कार्य्यमित्यन्वयः
(४) तुष्येत तुष्येत् । आत्मनेपदमार्षम् ।
(५) अकुतोभयान् भयमशङ्कमानान् ।
(६) द्वारदेशे द्वारादारभ्य वा ।
(७) कौरवाय कौरवः दुर्य्योधनः तत्प्रीत्यर्थम् ।
(८) राजन्निति जनमेजयसम्बोधनम् ।

पाण्डवास्तु रथान् युक्तान् सदश्वैरनिलोपमैः (१) ।
आरोहमाणा (२) भीष्मस्य पादौ जगृहुरार्त्तवत् (३) ॥
राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः ।
अन्येषाञ्चैव वृद्धानां कृपस्य विदुरस्य च ॥
एवं सर्व्वान् कुरून् वृद्धानभिवाद्य यतव्रताः (४) ।
समालिङ्ग्य समानान् वै बालैश्चाप्यभिवादिताः ॥
सर्व्वा मातृस्तथापृच्छ्य (५) कृत्वा चैव प्रदक्षिणम् ।
सर्व्वाः प्रकृतयश्चैव (६) प्रययुर्वारणावतम् ॥
विदुरश्च महाप्राज्ञस्तथान्ये कुरुपुङ्गवाः ।
पौराश्च पुरुषव्याघ्रानन्वयुः शोककर्षिताः (७) ॥
तत्र केचित् ब्रुवन्ति स्म ब्राह्मणा निर्भयास्तदा ।
दीनान् दृष्ट्वा पाण्डुसुतानतीव (८) भृशदुःखिताः ॥

---

(१) अनिलोपमैः वायुसदृशैः वायुसमवेगशालिभिरिति यावत् ।
(२) आरोहमाणाः आरोहन्तः । आत्मनेपदमार्षम् ।
(३) आर्त्तवत् आर्त्ताः । स्वार्थे वतिरार्षः ।
(४) यतव्रताः नियतव्रताः सदाचारपरिपालनरूपं व्रतमनुल्लङ्घमाना इत्यर्थः ।
(५) आपृच्छ्य सम्भाष्य ।
(६) प्रकृतयः प्रकृतीः । आर्षः प्रयोगः ।
(७) शोककर्षिताः शोकेन कृशीकृताः शोकाकुला इति यावत् । अन्वयुः अनुयान्ति स्म ।
(८) अतीवेत्यस्य दीनानित्यनेनान्वयः ।

विषमं पश्यते (१) राजा सर्व्वथा च सुमन्दधीः ।
कौरव्यो धृतराष्ट्रस्तु न च धर्म्मं प्रपश्यति ॥
न हि पापमपापात्मा रोचयिष्यति (२) पाण्डवः ।
भीमो वा बलिनां श्रेष्ठः कौन्तेयो वा धनञ्जयः ॥
अधर्म्मग्रमिदमत्यन्तं कथं भीष्मोऽनुमन्यते ।
विवास्यमानानस्थाने नगरे योऽभिमन्यते (३) ॥
पितेव हि नृपोऽस्माकमभूच्छान्तनवः पुरा ।
विचित्रवीर्य्यो राजर्षिः पाण्डुश्च कुरुनन्दनः ॥
तस्मिंस्तु (४) पुरुषव्याघ्रे देवभावं गते सति ।
राजपुत्रानिमान् बालान् धृतराष्ट्रो न मृष्यते ॥
वयमेतदनिच्छन्तः सर्व्वे एव पुरोत्तमात् ।
गृहान् विहाय गच्छामो यत्र गन्ता युधिष्ठिरः ॥
तांस्तथावादिनः पौरान् दुःखितान् दुःखकर्षितः ।
उवाच मनसा ध्यात्वा (५) धर्म्मराजो युधिष्ठिरः ॥

---

(१) विषमं पश्यते विरूपं पश्यति न सम्यक् विविनक्तीत्यर्थः पश्यते इत्यात्मनेपदमार्षम् ।

(२) पापम् अनिष्टम् धृतराष्ट्रस्येति शेषः। अपापात्मा शुद्धस्वभावः। रोचयिष्यति अभिलषिष्यति।

(३) अस्थाने अनुचितस्थानभूते नगरे वारणावते विवास्यमानान् अभिमन्यते अनुमोदते ।

(४) तस्मिन् पुरुषव्याघ्रे पाण्डौ ।

(५) मनसा ध्यात्वा मनसा विचिन्त्य वक्तव्यमवधार्य्येत्यर्थः ।

पिता मान्यो गुरुः श्रेष्ठो यदाह पृथिवीपतिः।
अशङ्कमानैस्तत् कार्य्यमस्माभिरिति नो व्रतम् (१)॥
भवन्तः सुहृदोऽस्माकमस्मान् कृत्वा प्रदक्षिणम् (२)।
प्रतिनन्द्य (३) तथाशीर्भिर्निवर्त्तध्वं (४) यथागृहम् (५)।
यदा तु कार्य्यमस्माकं भवद्भिरुपपत्स्यते (६)।
तदा करिष्यथास्माकं प्रियाणि च हितानि च॥
एवमुक्तास्ततः पौराः कृत्वा चापि प्रदक्षिणम्।
आशीर्भिरभिनन्द्यैतान् जग्मुर्नगरमेव च॥
पौरेषु विनिवृत्तेषु विदुरः सर्व्वधर्मवित्।
बोधयन् (७) पाण्डवश्रेष्ठमिदं वचनमब्रवीत्॥
यो जानाति परप्रज्ञां नीतिशास्त्रानुसारिणीम्।
विज्ञायेह तथा कुर्य्यादापदं निस्तरेद्यथा (८)॥

---

(१) अशङ्कमानैः हितमहितं वेति अतर्कयद्भिः। नो व्रतम् अस्माकं सङ्कल्पः।
(२) प्रदक्षिणं कृत्वा प्रदक्षिणीकृत्य। आर्षः प्रयोगः।
(३) प्रतिनन्द्य प्रीणयित्वा वर्द्धयित्वेति यावत्।
(४) निवर्त्तध्व निवर्त्तन्ताम्। आर्षः प्रयोगः।
(५) यथागृहम् गृहमनतिक्रम्य स्वं स्वं गृहं प्रतीत्यर्थः।
(६) यदा पुनः अस्माकं कार्य्यं भवद्भिः करणैः उपपत्स्यते सम्पत्स्यते भवतो साहाय्यमपेक्षिष्यते इत्यर्थः।
(७) बोधयन् अज्ञातं दुर्य्योधनकृतं कपटं ज्ञापयन्।
(८) यः पुरुषः नीतिशास्त्रानुसारिणीं परप्रज्ञां परस्य शत्रोः प्रज्ञां बुद्धिम्

अलोहं निशितं शस्त्रं शरीरपरिकर्त्तनम् ।
यो वेत्ति न तु तं घ्नन्ति प्रतिघातविदं द्विषः (१) ॥
कक्षघ्नः शिशिरघ्नश्च महाकक्षे विलौकसः ।
न दहेदिति चात्मानं यो रक्षति स जीवति (२) ॥
नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः ।

---

अभिप्रायमिति यावत् जानाति बुध्यते स विज्ञाय सम्यक् विविच्य इह अस्मिन् जगति पराभिप्रायविषये वा तथा कुर्य्यात् यथा आपदं निस्तरेत् अतिक्रामेत् । युष्माकं विनाशार्थं शत्रुभिरुपायः कल्पितः तमुद्भाव्य अवहितैः प्रतीकारः कर्त्तव्यः इति भावः ।

(१) यः पुरुषः शरीरपरिकर्त्तनं शरीरनाशकम् अलोहं लौहव्यतिरिक्तं निशितं तीक्ष्णं दुर्निवारमिति यावत् । शस्त्रं परप्रवर्त्तितं मारणोपायं वेत्ति बुध्यते द्विषः शत्रवः प्रतिघातविदं प्रतीकारसमर्थं तं न घ्नन्ति । अग्निदाहरूपी युष्माकं मारणोपायः शत्रुभिः प्रवर्त्तितस्तत्प्रतीकार समर्थश्चेदात्मानं रक्षिष्यसीति भावः ।

(२) कक्षघ्नः तृणकाष्ठादिसंहारकोऽग्निः विलौकसः विलवासिनो जीवान् न दहेत् शिशिरघ्नः सूर्य्यः महाकक्षे महावने स्थितानिति शेषः न दहेत् विनाशयेत् इति बुद्धा य आत्मानं रक्षति स जीवति । वारणावते युष्माकमग्निभयमस्ति अतो वासगृहे विलं कृत्वा रात्रौ तत्र स्थातव्यम् अग्नौ दत्ते सुरङ्गपथेन निष्क्रम्य पलायमानैर्दिवा महावने स्थातव्यम् तथा कृते प्रकाशसम्भावनाविरहात् शत्रवो न युष्माकं गतिं ज्ञास्यन्तीति भावः ।

नाधृतिर्भूतिमाप्नोति बुध्यस्वैवं प्रबोधितः (१) ॥
चरन् मार्गान् विजानाति नक्षत्रैर्विन्दते दिशः।
आत्मना चात्मनः पञ्च पीड़यन्नानुपीड्यते (२) ॥
एवमुक्तः प्रत्युवाच धर्म्मराजो युधिष्ठिरः।
विदुरं विदुषां श्रेष्ठं ज्ञातमित्येव (३) पाण्डवः ॥
अनुशिष्यानुगम्यैतान् कृत्वा चैव प्रदक्षिणम्।
पाण्डवानभ्यनुज्ञाप्य (४) विदुरः प्रययौ गृहान् ॥

---

(१) अचक्षुः दृष्टिहीनः पन्थानं न वेत्ति अचक्षुः दृष्टिहीनः दिशो न विन्दते न जानाति। वारणावतं गत्वा निर्गमप्रवेशादिपथज्ञानमवहितैः कर्त्तव्यम् अन्यथा पलायनमशक्यं स्यादिति भावः। अधृतिः धैर्य्यहीनः भूतिं सम्पदं नाप्नोति अतो धैर्य्यमवलम्बनीयम्। एवम् उक्तप्रकारेण प्रबोधितो बुद्ध्यस्व।

(२) चरन् इतस्ततो भ्राम्यन् मार्गान् पथः विजानाति मृगयादिव्यापारप्रसङ्गेन वर्त्मज्ञानं करणीयमिति भावः। नक्षत्रैर्दिशो निन्दते नक्षत्रोदयस्थितिसञ्चारादिपरिज्ञानं रजन्यां दिङ्निर्णये प्रधानं साधनम् अतस्तत्सम्पादनेऽवहितैर्भवितव्यमिति भावः। आत्मना बुद्धा विवेकशक्त्या इति यावत् पञ्च आत्मनः इन्द्रियाणि पीड़यन् निगृह्णन् न अनुपीड्यते न शत्रुभिरभिभूयते। अतः सर्व्वथा जितेन्द्रियैर्भवितव्यमिति भावः।

(३) ज्ञातमित्येव ज्ञातं बुद्धम् एतावन्मात्रमेव।

(४) पाण्डवानामनुज्ञां लब्ध्वा।

निवृत्ते विदुरे चापि भीष्मे पौरजने तथा ।
अजातशत्रुमामन्त्र्य (१) कुन्ती वचनमब्रवीत् ॥
क्षत्ता यदब्रवीद्वाक्यं जनमध्येऽब्रुवन्निव (२) ।
त्वया च स तथेत्युक्तो जानीमो न च तद्वयम् (३) ॥
यदीदं शक्यमस्माभिर्ज्ञातुं नैव च दोषवत् (४)
श्रोतुमिच्छामि तं सर्व्वं संवादं (५) तव तस्य च ॥

युधिष्ठिर उवाच ।

गृहादग्निश्च बोद्धव्य इति मां विदुरोऽब्रवीत् ।
पन्थाश्च वो नाविदितः कश्चित् स्यादिति धर्म्मधीः ॥
जितेन्द्रियश्च वसुधां प्राप्स्यतीति च मेऽब्रवीत् ।
विज्ञातमिति तत् सर्व्वं प्रत्युक्तो विदुरो मया ॥

वैशम्पायन उवाच ।

अष्टमेऽहनि रोहिण्यां प्रयाताः फाल्गुनस्य ते ।
वारणावतमासाद्य ददृशुर्नागरं जनम् ॥
ततः सर्व्वाः प्रकृतयो नगराद्वारणावतात् ।
अभिजग्मुर्नरश्रेष्ठान् श्रुत्वैव परया मुदा ॥

---

(१) अजातशत्रुं युधिष्ठिरम् आमन्त्र्य सम्बोध्य। युधिष्ठिरस्य न कोऽपि शत्रुरासीत् अतोऽस्याजातशत्रुरिति संज्ञा ।

(२) अन्येषां बोधाविषयत्वात् ।

(३) यद्वाक्यमब्रवीत् तद्वयं न जानीमः न बुध्यामहे ।

(४) नैव च दोषवत् अस्माभिर्ज्ञातं यदि दोषाय न भवति

(५) संवादम् मिथः सम्भाषम् ।

ते समासाद्य कौन्तेयान् वारणावतका (१) जनाः ।
कृत्वा जयाशिषः (२) सर्व्वे परिवार्य्यावतस्थिरे ॥
तैर्वृतः पुरुषव्याघ्रो धर्म्मराजो युधिष्ठिरः ।
विबभौ देवसङ्काशो (३) वज्रपाणिरिवामरैः ॥
सत्कृताश्चैव पौरैस्ते पौरान् सत्कृत्य चानघाः (४) ।
अलङ्कृतं जनाकीर्णं विविशुर्वारणावतम् ॥
ते प्रविश्य पुरीं वीरास्तूर्णं जग्मुरथो गृहान् ।
ब्राह्मणानां महीपाल रतानां स्वेषु कर्म्मसु ॥
नगराधिकृतानाञ्च (५) गृहाणि रथिनां तथा (६) ।
उपतस्थुर्नरश्रेष्ठा वैश्यशूद्रगृहाण्यपि ॥
अर्च्चिताश्च नरैः पौरैः पाण्डवा भरतर्षभ ।
जग्मुरावसथं पश्चात् पुरोचनपुरःसराः ॥
तेभ्यो भक्ष्याणि पानानि शयनानि शुभानि (७) च ।
आसनानि च मुख्यानि (८) प्रददौ स पुरोचनः ॥

---

(१) वारणावतकाः वारणावतवासिनः ।
(२) जयाशिषः जयम् आशिषश्च ।
(३) देवसङ्काशः देवसदृशः ।
(४) अनघाः निष्पापाः विशुद्धचरिता इति यावत् ।
(५) नगराधिकृतानां नगररक्षणे नियुक्तानां पुरुषाणाम् ।
(६) रथिनां सेनापतीनाम् ।
(७) शुभानि रमणीयानि शयनानि शय्याः ।
(८) मुख्यानि प्रधानानि महामूल्यानीति यावत् ।

तत्र ते सत्कृतास्तेन सुमहार्हपरिच्छदाः ।
उपास्यमानाः पुरुषैरूषुः पुरनिवासिभिः ॥
दशरात्रोषितानान्तु तत्र तेषां पुरोचनः ।
निवेदयामास गृहं शिवाख्यमशिवं (१) तदा ॥
तत्तु ते पुरुषव्याघ्रा विविशुः सपरिच्छदाः (२) ।
पुरोचनस्य वचनात् कैलासमिव गुह्यकाः (३) ॥
तच्चागारमभिप्रेक्ष्य सर्व्वधर्म्मभृतां वरः ।
उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः ।
जिघ्राणोऽस्य (४) वसागन्धं सर्पिर्जतुविमिश्रितम् ॥
विश्वस्तं मामयं पापो दग्धुकामः पुरोचनः ।
तथाहि वर्त्तते मन्दः सुयोधनवशे स्थितः (५) ॥
इमान्तु तां महाबुद्धिर्विदुरो दृष्टवांस्तदा (६) ।
आपदं तेन मां पार्थ स सम्बोधितवान् (७) पुरा ॥

---

(१) शिवाख्यमशिवम् आपाततः शिवमिव प्रतीयमानम् वस्तुतोऽशिव प्राण्डवानां वासार्थं निर्मितमाग्नेयं गृहमित्यर्थः ।

(२) सपरिच्छदाः सानुचराः सपरिजनाश्च ।

(३) गुह्यकाः कुवेरानुचराः देवयोनिविशेषाः ।

(४) जिघ्राणः जिघ्रन् । आत्मनेपदमार्षम् ।

(५) मन्दः मूढः दुर्मतिरिति यावत् पुरोचनः सुयोधनवशे स्थितः दुर्योध वशवर्त्ती सन् तथा वर्त्तते तथा प्रवर्त्तते अस्मन्मारणार्थं यतते इत्यर्थ

(६) दृष्टवान् बुद्धवान् ।

(७) सम्बोधितवान् बोधयामास ।

ते वयं बोधितास्तेन नित्यमस्मद्धितैषिणा ।
पित्रा कनीयसा स्नेहाद्बुद्धिमन्तोऽशिवं गृहम् ।
अनार्य्यैः सुकृतं मूढ़ैर्दुर्य्योधनवशानुगैः ॥

भीमसेन उवाच ।

यदीदं गृहमाग्नेयं विहितं (१) मन्यते भवान् ।
तत्रैव साधु गच्छामो यत्र पूर्व्वोषिता (२) वयम् ॥

युधिष्ठिर उवाच ।

इह यत्तैर्निराकारैर्वस्तव्यमिति रोचये ।
अप्रमत्तैर्विचिन्वद्भिर्गतिमिष्टां ध्रुवामितः (३) ॥
यदि विन्देत (४) चाकारमस्माकं स पुरोचनः ।
क्षिप्रकारी ततो भूत्वा प्रसह्यापि दहेत (५) नः ॥
नायं बिभेत्युपक्रोशादधर्म्माद्वा (६) पुरोचनः ।
तथाहि वर्त्तते मन्दः सुयोधनवशे स्थितः ॥

---

(१) विहितं निर्म्मितम् ।

(२) पूर्व्वोषिताः पूर्व्वं कृतवासाः ।

(३) यत्तैः यत्नवद्भिः । निराकारैः आकारहीनैः गूढ़ाकारैरिति यावत् अस्माभिस्तथा वर्त्तितव्यं यथा मुखरागादिदर्शनेन न कोऽप्यस्माकमान्तरं भावमवबोद्धुं शक्नुयादिति भावः । अप्रमत्तैः अवहितैः । इष्टाम् अभिलषितां ध्रुवां स्थिरां परिणामे निरुपद्रवामिति यावत् इतः अस्मादाग्नेयात् गृहात् गतिं प्रस्थानं विचिन्वद्भिः अन्विष्यद्भिः चिन्तयद्भिरिति यावत् ।

(४) विन्देत लभेत जानीयादिति यावत् ।

(५) दहेत दहेत् । आत्मनेपदमार्षम् । (६) उपक्रोशः निन्दा ।

वयं तु यदि दाहस्य बिभ्यतः प्रद्रवेम (१) हि ।
स्पशैर्नो घातयेत् सर्व्वान् राज्यलुब्धः सुयोधनः (२) ॥
अपदस्थान् पदे तिष्ठन्नपचान् पक्षसंस्थितः ।
हीनकोषान् महाकोषः प्रयोगैर्घातयेद्ध्रुवम् (३) ॥
तदस्माभिरिमं पापं (४) तञ्च पापं सुयोधनम् ।
वञ्चयद्भिर्निवस्तव्यं (५) छन्नावासं (६) क्वचित् क्वचित्
ते वयं मृगयाशीलाश्चराम वसुधामिमाम् ।
यथा नो विदिता मार्गा भविष्यन्ति पलायताम् (७)
भौमञ्च (८) बिलमद्यैव करवाम सुसंवृतम् ।

---

(१) दाहस्य बिभ्यतः दाहात् त्रसन्तः दाहभयेनेति भावः । दाहस्ये
षष्ठीप्रयोग आर्षः । प्रद्रवेम पलायेमहि ।

(२) स्पशैः चरैः । राज्यलुब्धः राज्यलोभाक्रान्तः ।

(३) अपचान् असहायान् । पक्षसंस्थितः पक्षैः सहायैः संस्थितः परि
बहुसहाय इति यावत् । हीनकोषान् निर्धनान् । महाकोषः बहुधनः
प्रयोगैः नीतिशास्त्रोक्तैः सामदानभेददण्डाख्यैश्चतुर्भिरुपायैः ।

(४) इमं पुरोचनम् । पापं पापात्मानम् ।

(५) वञ्चयद्भिः वञ्चयमानैः । परस्मैपदमार्षम् ।

(६) छन्नावासम् छन्नः गूढः अन्यैरतर्कित इति यावत् आवासः ।
अवस्थितिस्थानं यस्मिन् कर्म्मणि तत् ।

(७) पलायताम् पलायमानानाम् । परस्मैपदमार्षम् ।

(८) भौमं भूमेरन्तर्वर्त्ति ।

गूढ़ोच्छ्वासान्न नस्तत्र (१) हुताशः संप्रधक्ष्यति ॥
वसतोऽत्र (२) यथा चास्मान्न बुध्येत पुरोचनः ।
पौरो वापि जनः कश्चित्तथा कार्य्यमतन्द्रितैः (३) ॥

वैशम्पायन उवाच ।

विदुरस्य सुहृत् कश्चित् खनकः कुशलः शुचिः ।
विविक्ते पाण्डवान् राजन्निदं वचनमब्रवीत् (४) ॥
प्रहितो विदुरेणास्मि खनकः कुशलो ह्यहम् ।
पाण्डवानां प्रियं कार्य्यमिति किं करवाणि वः (५) ॥
कृष्णपक्षे चतुर्दश्यां रात्रावस्य पुरोचनः ।
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ॥
मात्रा सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभ ।
इति व्यवसितं (६) तस्य धार्त्तराष्ट्रस्य दुर्म्मतेः ॥
किञ्चिच्च विदुरेणोक्तो म्लेच्छवाचासि (७) पाण्डव ।

---

(१) तत्र बिले गूढ़ोच्छ्वासान् गूढ़मवस्थितान् । गूढ़ः गुप्तः अन्यैरतर्कित इति यावत् । उच्छ्वासः जीवनम् अवस्थितिरिति यावत् ।

(२) अत्र बिले ।

(३) अतन्द्रितैः अनलसैः अवहितैर्वा अस्माभिरिति शेषः ।

(४) खनकः यो भूमिं खनति । कुशलः कार्य्यनिपुणः । शुचिः अन्तःशुद्धः अर्थप्रदानादिना भेदयितुमशक्य इति यावत् । विविक्ते विजने । राजन्निति जनमेजयसम्बोधनम् ।

(५) पाण्डवानां प्रियं कार्य्यमित्युपदिश्य विदुरेण प्रहितः प्रेरितोऽस्मि ।

(६) व्यवसितं चेष्टितं सङ्कल्पो वा । (७) म्लेच्छवाचा म्लेच्छभाषया ।

त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् (१) ॥
उवाच तं सत्यधृतिः (२) कुन्तीपुत्रो युधिष्ठिरः ।
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै (३) ॥
शुचिमाप्तं (४) प्रियञ्चैव सदा च दृढ़भक्तिकम् ।
न विद्यते कवेः किञ्चिदभिज्ञानप्रयोजनम् (५) ॥
यथा तस्य तथा नस्त्वं निर्विशेषा वयं त्वयि ।
भवतश्च यथा तस्य पालयास्मान् यथा कविः (६) ॥
इदं शरणमाग्नेयं मदर्थमिति मे मतिः ।
पुरोचनेन विहितं धार्त्तराष्ट्रस्य शासनात् (७) ॥

---

(१) विश्वासकारणम् अहं तव श्रेयःसम्पादनार्थं विदुरेण प्रेरितः न तु विपक्षप्रणिधिरिति विश्वासजनकम् ।

(२) सत्यधृतिः सत्ये धृतिः अनुरागो यस्य सः सत्यव्रतपरायण इत्यर्थः ।

(३) त्वं विदुरस्य सुहृदिति प्रत्यभिजानामि ।

(४) आप्तं प्रत्ययितं विश्वस्तमिति यावत् ।

(५) कवेः सर्वज्ञस्य विदुरस्येत्यर्थः । त्वं विदुरस्य सुहृदिति विश्वासोत्पादनार्थमभिज्ञानादेर्चा नास्तीति भावः ।

(६) यथा त्वं तस्य विदुरस्य सुहृदिति शेषः नः अस्माकमपि तथा सुहृदित्यर्थः । वयं त्वयि निर्विशेषा विदुरादविशेषाः विदुरो यथा त्वयि वर्तते वयमपि तथा त्वयि वर्तामहे इति भावः । वयं तस्य विदुरस्य यथा रक्षणीया इति शेषः भवतश्च भवतोऽपि तथा । अतः कविर्यथा विदुर इव त्वमस्मान् पालय रक्ष ।

(७) शरणं गृहम् । मदर्थं मद्विनाशार्थम् । शासनात् आदेशात् ।

स पापः कौरवांश्चैव ससहायश्च दुर्मतिः ।
अस्मानपि च पापात्मा नित्यकालं प्रबाधते (१) ॥
स भवान् मोक्षयत्वस्मान् यत्नेनास्माद्धुताशनात् ।
अस्मास्विह हि दग्धेषु सकामः (२) स्यात् सुयोधनः ॥
इदं तदशुभं नूनं तस्य कर्म्म चिकीर्षितम् ।
प्रागेव विदुरो वेद (३) तेनास्मानन्वबोधयत् ॥
सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान् पुरा ।
पुरोचनस्याविदितानस्मांस्त्वं प्रतिमोचय ॥

स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः ।
कृत्तिकामुत्किरन् नाम चकार सुमहद्बिलम् (४) ॥
चक्रे च वेश्मनस्तस्य मध्ये नातिमहद्बिलम् ।
कपाटयुक्तमज्ञातं समं भूम्याश्च भारत (५) ॥
तत्र ते सायुधाः सर्वे वसन्ति स्म क्षपां नृप ।
दिवा चरन्ति मृगयां पाण्डवेया वनाद्वनम् (६) ॥
विश्वस्तवदविश्वस्ता वञ्चयन्तः (७) पुरोचनम् ।

---

(१) सः दुर्योधनः । पापः दुष्टाशयः । पापात्मा दुरात्मा । प्रबाधते पीड़यति ।
(२) सकामः पूर्णमनोरथः । (३) वेद विवेद । वर्त्तमानप्रयोग आर्षः ।
(४) कृत्तिकाम् उत्किरन् वहिः क्षिपन् । सुमहत् बिलम् अतिमहान्तं गर्त्तं सुरङ्गामिति यावत् ।
(५) भारत भरतकुलजात । जनमेजयसम्बोधनम् ।
(६) वनाद्वनम् वनान्तरं गत्वेत्यर्थः ।
(७) वञ्चयन्तः वञ्चयमानाः । परस्मैपदमार्षम् ।

अतुष्टास्तुष्टवद्राजन्नूषु: परमविस्मिता: (१) ॥
न चैतानन्वबुध्यन्त (२) नरा नगरवासिन: ।
अन्यत्र (३) विदुरामात्यात् तस्मात् खनकसत्तमात्।
तांस्तु दृष्ट्वा सुमनस: (४) परिसंवत्सरोषितान् ।
विश्वस्तांश्चैव संलक्ष्य हर्षञ्चक्रे पुरोचन: ॥
पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिर: ।
भीमसेनार्ज्जुनौ चैव यमौ (५) प्रोवाच धर्म्मवित्॥
अस्मानयं सुविश्वस्तान् वेत्ति (६) पाप: पुरोचन: ।
वञ्चितोऽयं नृशंसात्मा कालं मन्ये पलायने (७) ॥
आयुधागारमादीप्य (८) दग्ध्वा चैव पुरोचनम् ।
षट्प्राणिनो निधायेह (९) द्रवामोऽनभिलक्षिता: (१

---

(१) परमविस्मिता: अत्यन्तं विस्मयाविष्टा: ।
(२) ते किमाचरन्ति कुत्र वा तिष्ठन्तीति न बुबुधिरे इत्यर्थ: ।
(३) अन्यत्र विना । (४) सुमनस: प्रसन्नचितान् ।
(५) यमौ युग्मजातौ नकुलसहदेवौ । (६) वेत्ति मन्यते ।
(७) पलायनस्यायं समय इति मन्ये । (८) आदीप्य दग्ध्वा ।
(९) इह अस्मिन् गृहे षट् प्राणिन: एकां स्त्रीं पञ्च पुरुषांश्च निधाय स्था-
पयित्वा । षट्सु प्राणिषु दग्धेषु दृष्टेषु पाण्डवा दग्धा इति दुर्य्योधना
मंस्यन्ते तद्दर्शने च पाण्डवान् पलायितान् मत्वा पुनस्तेषां पा
नामन्वेषणे प्रवृत्ति: स्यात् तद्वारणार्थं षट्प्राणिस्थापनम् ।
(१०) द्रवाम: पलायामहे । अनभिलक्षिता: अन्यैरपरिज्ञाता: ।

अथ दानापदेशेन (१) कुन्ती ब्राह्मणभोजनम् ।
चक्रे निशि महाराज (२) आजग्मुस्तत्र योषितः ॥
ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत ।
जग्मुर्निशि गृहानेव समनुज्ञाप्य माधवीम् (३) ॥
निषादी पञ्चपुत्रा तु तस्मिन् भोज्ये (४) यदृच्छया ।
अन्नार्थिनी समभ्यागात् सपुत्रा कालनोदिता (५) ॥
सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला ।
सह सर्व्वैः सुतै राजंस्तस्मिन्नेव निवेशने ।
सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ॥
अथ प्रवाते तुमुले (६) निशि सुप्ते जने तथा ।
तदुपादीपयद्भीमः शेते (७) यत्र पुरोचनः (८) ॥
ततो जतुगृहद्वारं दीपयामास पाण्डवः ।
समन्ततो ददौ पश्चादग्निं तत्र निवेशने ॥
ज्ञात्वा तु तद्गृहं सर्व्वमादीप्तं पाण्डुनन्दनाः ।
सुरङ्गां विविशुस्तूर्णं मात्रा सार्द्धमरिन्दमाः ॥
ततः प्रतापः सुमहान् शब्दश्चैव विभावसोः ।

---

(१) दानापदेशेन दानव्याजेन दानक्रियामुपलक्ष्येत्यर्थः ।
(२) महाराजेति जनमेजयसम्बोधनम् । (३) माधवीं कुन्तीम् ।
(४) भोज्ये ब्राह्मणभोजनव्यापारे । (५) कालनोदिता नियतिप्रेरिता ।
(६) तुमुले महति प्रवाते वायौ वाति सतीति शेषः ।
(७) शेते अशेत । वर्त्तमानप्रयोगः आर्षः ।
(८) यत्र यस्मिन् गृहे पुरोचनः शेते तत् उपादीपयत् तत्र अग्निं ददौ ।

प्रादुरासीत्तदा तेन बुबुधे (१) स जनव्रजः (२) ॥
तदवेक्ष्य गृहं दीप्तमाहुः (३) पौराः कृशानुना।
दुर्य्योधनप्रयुक्तेन पापेनाकृतबुद्धिना (४)।
गृहमात्मविनाशाय (५) कारितं दाहितञ्च तत्॥
अहो धिक् धृतराष्ट्रस्य बुद्धिर्नास्ति समञ्जसी (६)।
यः शुचीन् पाण्डुदायादान् (७) दाहयामास शत्रुवत्
दिष्ट्या त्विदानीं पापात्मा दग्धोऽयमतिदुर्मतिः।
अनागसः (८) सुविश्वस्तान् यो (९) ददाह नरोत्तमान्
एवं ते विलपन्ति स्म वारणावतका जनाः।
परिवार्य्य (१०) गृहं तच्च तस्थू रात्रौ समन्ततः॥
पाण्डवाश्चापि ते सर्व्वे सह मात्रा सुदुःखिताः।
बिलेन तेन निर्गत्य जग्मुर्द्रुतमलक्षिताः॥

---

(१) बुबुधे जागरितवान्।
(२) जनव्रजः वारणावतवासी लोकसमूहः।
(३) दीप्तं प्रज्वलितम्।
(४) अकृतबुद्धिना अपरिणतबुद्धिना अपरिणामदर्शिनेति यावत्।
(५) आत्मविनाशाय स्वजनध्वंसाय।
(६) धृतराष्ट्रस्य बुद्धिः समञ्जसी न्यायमार्गानुसारिणी नास्ति न भवति।
(७) शुचीन् विशुद्धचरितान् पाण्डुदायादान् पाण्डुतनयान्।
(८) अनागसः निरपराधान्।
(९) यः पुरोचनः।
(१०) परिवार्य्य वेष्टयित्वा।

## द्रौपदीयुधिष्ठिरसंवादः।

ततो वनगताः पार्थाः सायाह्ने सह कृष्णया (१)।
उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः॥
प्रिया च दर्शनीया च पण्डिता च पतिव्रता (२)।
अथ कृष्णा धर्मराजमिदं वचनमब्रवीत्॥
न नूनं तस्य पापस्य दुःखमस्मासु (३) किञ्चन।
विद्यते धार्त्तराष्ट्रस्य नृशंसस्य दुरात्मनः॥
यस्त्वां राजन् मया सार्द्धमजिनैः प्रतिवासितम् (४)।
वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत (५) दुर्मतिः॥
आयसं (६) हृदयं नूनं तस्य दुष्कृतकर्मणः।
यस्त्वां धर्मपरं ज्येष्ठं रूक्षाण्यश्रावयत्तदा (७)॥
सुखोचितमदुःखार्हं (८) दुरात्मा ससुहृद्गणः।

---

(१) कृष्णया द्रौपद्या।

(२) प्रिया प्रीतिप्रदा पतीनामिति शेषः। दर्शनीया दर्शनयोग्या रूप-लावण्यवतीति यावत्। पण्डिता हिताहितविवेकसमर्था।

(३) अस्मासु दुःखितेष्विति शेषः।

(४) अजिनैः प्रतिवासितम् अजिनैः पशुचर्मभिः प्रतिवासितम् आच्छादितं पशुचर्माणि परिदधानमित्यर्थः।

(५) न अन्वतप्यत नानुतापमभजत्।

(६) आयसम् अयः लौहः तेनैव निर्म्मितम् अतिकठिनमिति यावत्।

(७) रूक्षाणि परुषवचनानि।

(८) सुखोचितं सुखाभ्यस्तं सुखेन कालमतिवाहितवन्तमिति यावत् अदुःखार्हं दुःखभोगानर्हं त्वामिति शेषः।

ईदृशं दुःखमानीय (१) मोदते पापपूरुषः ॥
चतुर्णामिव पापानामश्रुं न पतितं तदा ।
त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ॥
दुर्य्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुर्भ्रातुस्तस्य चोग्रस्य राजन् दुःशासनस्य च (२) ॥
इतरेषान्तु सर्व्वेषां कुरूणां कुरुसत्तम ।
दुःखेनाभिपरीतानां (३) नेत्रेभ्यः प्रापतज्जलम् ॥
इदञ्च शयनं दृष्ट्वा यच्चासीत्ते पुरातनम् (४) ।
शोचामि त्वां महाराज दुःखानर्हं सुखोचितम् ॥
दान्तं तच्च सभामध्ये आसनं (५) रत्नभूषितम् ॥
दृष्ट्वा कुशवृसीं (६) चेमां शोको मां रुन्धयत्यलम् (७)॥

---

(१) ईदृशं दुःसहं दुःखम् आनीय प्रापय्य दुस्तरे दुःखसागरे निक्षिप्येत्यर्थः ।
(२) दुर्भ्रातुः असद्भ्रातुः उल्लङ्घितभ्रातृधर्मस्येत्यर्थः । उग्रस्य क्रूरप्रकृतेः ।
(३) अभिपरीतानाम् अभिभूतानाम् ।
(४) इदम् इदानीन्तनं शयनं शय्यां दृष्ट्वा यच्च ते तव पुरातनं राज्याधिकार-कालिकमिति यावत् शयनमासीत् तत् संस्मृत्येति शेषः उभयोरन्तरं समालोच्येत्यर्थः ।
(५) दान्तं गजदन्तविनिर्मितम् आसनं सिंहासनम् संस्मृत्येति शेषः ।
(६) कुशवृसीं कुशासनम् ।
(७) रुन्धयति आवृणोति मोहयतीत्यर्थः । रुन्धयतीत्यार्षः प्रयोगः रुणद्धीति साधुः ।

यदपश्यं सभायां त्वां राजभिः परिवारितम् ।
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥
या त्वाहं (१) चन्दनादिग्धमपश्यं सूर्य्यवर्चसम् ।
सा त्वां पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत (२) ॥
या त्वाहं कौषिकैर्वस्त्रैः (३) शुभ्रैराच्छादितं पुरा ।
दृष्टवत्यस्मि राजेन्द्र सा त्वां पश्यामि चीरिणम् (४) ॥
यांस्ते भ्रातॄन् महाराज युवानो मृष्टकुण्डलाः (५) ।
अभोजयन्त मिष्टान्नैः सूदाः परमसंस्कृतैः (६) ॥
सर्व्वांस्तानद्य संप्रेक्ष्य वने वन्येन जीविनः (७) ।
अदुःखार्हान् मनुष्येन्द्र नोपशाम्यति मे मनः ॥
भीमसेनमिमञ्चापि दुःखितं वनवासिनम् ।
ध्यायतः किं न मन्युस्ते प्राप्ते काले विवर्द्धते (८) ॥

---

(१) त्वा त्वाम् ।
(२) पङ्कमलादिग्धम् पङ्करूपेण मलेन प्रलिप्तम् । मुह्यामि मोहमाप्नोमि विचेतना भवामीति यावत् ।
(३) कौषिकैः कृमिकोषसम्भूतैः पट्टसूत्रनिर्म्मितैरिति यावत् ।
(४) चीरिणम् चीरधारिणम् । चीरं छिन्नवस्त्रम् ।
(५) मृष्टकुण्डलाः उज्ज्वलकुण्डलधारिणः ।
(६) परमसंस्कृतैः अतिमहता यत्नेन पक्वैः परमसंस्कृतानि मिष्टान्नानि इत्यर्थः । कर्म्मणि तृतीयाप्रयोगः आर्षः ।
(७) वन्येन वनोद्भवेन फलमूलादिना ।
(८) ध्यायतः चिन्तयतः भीमस्येदृशीं दशां पर्य्यालोचयत इत्यर्थः । मन्यु-

अयं कुरून् रणे सर्व्वान् हन्तुमुत्सहते (१) प्रभुः (२) ।
त्वत्प्रतिज्ञां (३) प्रतीक्षंस्तु (४) सहतेऽयं वृकोदरः ॥
योऽर्ज्जुनेनार्ज्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
शरावमर्द्दे शीघ्रत्वात् (५) कालान्तकयमोपमः (६) ॥
यस्य शस्त्रप्रतापेन प्रणताः सर्व्वपार्थिवाः ।
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे (७) ॥
तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः ।
ध्यायन्तमर्ज्जुनं (८) दृष्ट्वा कस्माद्राजन्न कुप्यसि ॥

---

क्रोधः । प्राप्ते काले क्रोधप्रदर्शनस्योचिते काले उपस्थिते तादृशः कालः प्राप्तः इति भावः ।

(१) उत्सहते प्रभवति ।

(२) प्रभुः समर्थः प्रभूतबलविक्रमसम्पन्न इति यावत् ।

(३) त्वत्प्रतिज्ञां त्वया कृतां द्वादशवार्षिकवनवासप्रतिज्ञाम् ।

(४) प्रतीक्षन् प्रतीक्षमाणः । परस्मैपदन्तार्षम् ।

(५) योऽर्ज्जुनः शरावमर्द्दे शरैर्विपक्षदलने विपक्षेषु शरक्षेपे इति यावत् शीघ्रत्वात् लघुहस्तत्वात् अतिद्रुतकारित्वादिति यावत् द्विबाहुरपि बहुबाहुना सहस्रबाहुना अर्ज्जुनेन कार्त्तवीर्य्येण तुल्यः ।

(६) कालान्तकयमोपमः प्रलयकालिकयमतुल्यः । कालः कल्पः तस्य अन्तः कालान्तः प्रलयः । कल्पान्ते हि यमः संहारमूर्त्तिं परिगृह्य सर्गनेव प्रजाक्षयं करोति संग्रामकालेऽर्ज्जुनोऽपि तद्वद्भवतीति भावः ।

(७) यज्ञे राजसूये । उपतस्थिरे परिचरन्ति स्म ।

(८) ध्यायन्तं चिन्तयन्तं शोकमग्नमिति यावत् ।

दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम् ।
न च ते वर्द्धते मन्युस्तेन मुह्यामि भारत ॥
यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत् (१) ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते ॥
यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः ।
प्रसह्य वित्तान्यादत्त पार्थिवेभ्यः परन्तपः ॥
क्षिपत्येकेन वेगेन (२) पञ्च बाणशतानि यः ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्द्धते ॥
श्यामं बृहन्तं तरुणं चर्म्मिणामुत्तमं रणे (३) ।
नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्द्धते ॥
दर्शनीयञ्च शूरञ्च माद्रीपुत्रं युधिष्ठिर ।
सहदेवं वने दृष्ट्वा कस्मात् क्षमसि (४) पार्थिव ॥
नकुलं सहदेवञ्च दृष्ट्वा ते दुःखितावुभौ ।
अदुःखार्हौ मनुष्येन्द्र कस्मान्मन्युर्न वर्द्धते ॥
द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः ।
मां ते वनगतां दृष्ट्वा कस्मान्मन्युर्न वर्द्धते ॥

---

(१) एकरथः एकमात्ररथसमेतः एकाकीति यावत् ।
(२) एकेन वेगेन एकेन उद्यमेन युगपदिति यावत् ।
(३) श्यामं श्यामकलेवरम् । बृहन्तं दीर्घकायम् । चर्म्मिणां फलकधारिणाम् उत्तमं श्रेष्ठम् खड्गयुद्धे अतिनिपुणमिति यावत् ।
(४) क्षमसि क्षमसे । परस्मैपदमार्षम् ।

धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रताम् (१) ।
मां वै वनगतां दृष्ट्वा कस्मात् क्षमसि पार्थिव ॥
नूनञ्च तव वै नास्ति मन्युर्भरतसत्तम ।
यत्ते भ्रातॄंश्च माञ्चैव दृष्ट्वा न व्यथते मनः ॥
न निर्मन्युः क्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् (२) ।
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् (३) ॥
यो न दर्शयते तेजः क्षत्रियः काल आगते (४) ।
सर्व्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥
तत्त्वया न क्षमा कार्य्या शत्रून् प्रति कथञ्चन ।
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ॥
तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति (५) ।
अप्रियः सर्व्वभूतानां सोऽमुत्रेह च (६) नश्यति ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

---

(१) वीरपत्नीम् वीराः पतयोऽस्यास्ताम् नासहायामित्यर्थः। अनुव्रताम् पतिपरायणाम् नापि तेषां विरागभाजनमित्यर्थः। सर्व्वथा ईदृशस्य परिभवस्य क्लेशभोगस्य चाहमयोग्येति भावः।
(२) क्षत्रियः क्रोधहीनो न भवतीति लोके प्रसिद्धिरस्ति।
(३) विपरीतवत् विपरीतमिव।
(४) तेजः क्रोधम्। काले आगते तेजोदर्शनस्यावसरे प्राप्ते।
(५) नोपशाम्यति न शममवलम्बते।
(६) अमुत्र परस्मिन् लोके इह अस्मिन् लोके।

प्रह्लादस्य च संवादं (१) बलेर्वैरोचनस्य (२) च ॥
असुरेन्द्रं महात्मानं धर्म्माणामागतागमम् (३)।
बलिः पप्रच्छ दैत्येन्द्रं प्रह्लादं पितरं पितुः ॥
क्षमा स्वित् (४) श्रेयसी तात उताहो तेज इत्युत।
एष मे संशयस्तात यथावद्ब्रूहि पृच्छते (५) ॥
श्रेयो यदत्र (६) धर्म्मज्ञ ब्रूहि मे तदसंशयम्।
करिष्यामि हि तत् सर्व्वं यथावदनुशासनम् (७) ॥
तस्मै प्रोवाच तत् सर्व्वमेवं पृष्टः पितामहः।
सर्व्वनिश्चयवित् (८) प्राज्ञः संशयं (९) परिपृच्छते ॥
न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा।
इति तात विजानीहि द्वयमेतदसंशयम् ॥
यो नित्यं क्षमते तात बहून् दोषान् स पश्यति।
भृत्याः परिभवन्त्येनमुदासीनास्तथारयः (१०) ॥

---

(१) प्रह्लादबलिसंवादरूपमितिहासम्।
(२) प्रह्लादतनयस्य विरोचनस्यापत्यं पुमान् वैरोचनः।
(३) धर्म्माणामागतागमम् धर्म्माणां ज्ञातरहस्यम् सर्व्वधर्म्मतत्त्वज्ञमित्यर्थः।
(४) स्वित् प्रश्ने।
(५) पृच्छते संशयनिरासार्थं जिज्ञासमानाय।
(६) श्रेयो यदत्र अत्र अनयोः क्षमातेजसोर्मध्ये यत् श्रेयः प्रशस्यतरम्।
(७) तत् सर्व्वमनुशासनं यथावत् करिष्यामि अनुसरिष्यामि।
(८) सर्व्वेषां पदार्थानां निश्चयं सिद्धान्तं वेत्तीति सः।
(९) संशयं संशयनिरासार्थम्।
(१०) परिभवन्ति अवमन्यन्ते।

सर्व्वभूतानि चाप्यस्य न नमन्ते (१) कदाचन ।
तस्मान्नित्यं क्षमा तात पण्डितैरपवादिता (२) ॥
अवज्ञाय हि तं भृत्या भजन्ते बहुदोषताम् ।
आदातुञ्चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः (३) ॥
यानं वस्त्राण्यलङ्कारान् शयनान्यासनानि च ।
भोजनान्यथ पानानि सर्व्वोपकरणानि च ॥
आददीरन्नधिकृता (४) यथाकाममचेतसः (५) ।
प्रदिष्टानि (६) च देयानि न दद्युर्भर्त्तृशासनात् (७) ॥
न चैनं भर्त्तृपूजाभिः (८) पूजयन्ति कथञ्चन ।
अवज्ञानं हि लोकेऽस्मिन् मरणादपि गर्हितम् ॥
एते चान्ये च बहवो नित्यं दोषाः क्षमावताम् ।
अथ वैरोचने दोषानिमान् विद्ध्यक्षमावताम् ।
अस्थाने यदि वा (९) स्थाने सततं रजसावृतः ।

---

(१) अस्य न नमन्ते नैनमाद्रियन्ते इत्यर्थः । नमन्ते इति कर्म्मकर्त्तरि प्रयोगः ।  (२) अपवादिता निन्दिता ।
(३) प्रार्थयन्ते अभिलषन्ति । अल्पचेतसः लघुचित्तस्य ।
(४) अधिकृताः यानादिरक्षणे नियुक्ताः पुरुषाः ।
(५) अचेतसः शून्यहृदयस्य ।
(६) प्रदिष्टानि इमान्यर्थिभ्यो दीयन्तामित्यनुज्ञातानि ।
(७) भर्त्तृशासनात् भर्त्तृशासनमनुसृत्य ।
(८) भर्त्तृपूजाभिः प्रभुयोग्यसत्कारैः ।
(९) यदिवा अथवा ।

क्रुद्धो दण्डान् प्रणयति विविधान् स्वेन तेजसा (१) ॥
मित्रैः सह विरोधञ्च लभते तेजसावृतः (२)।
आप्नोति द्वेष्यताञ्चैव लोकात् स्वजनतस्तथा (३) ॥
क्रोधाद्दण्डान् मनुष्येषु विविधान् पुरुषो नयन् (४)।
भ्रश्यते (५) शीघ्रमैश्वर्यात् प्राणेभ्यः स्वजनादपि ॥
योपकर्त्तृंश्च (६) हन्तृंश्च तेजसैवोपगच्छति (७)।
तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव (८) ॥
यस्मादुद्विजते लोकः कथं तस्य भवो (९) भवेत्।
अन्तरं तस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् (१०) ॥
तस्मान्नात्युत्सृजेत्तेजो (११) न च नित्यं मृदुर्भवेत्।

---

(१) क्रुद्धः क्रोधशीलः पुरुषः रजसावृतः रजोगुणेनाभिभूतः सन् स्वेन तेजसा स्वक्रोधेन हेतुभूतेन क्रोधवशो भूत्वेत्यर्थः स्थाने अस्थाने वा सततं विविधान् दण्डान् प्रणयति प्रयुङ्क्ते। तादृशः पुरुषो दण्डप्रणयनस्य स्थानास्थानविवेकसमर्थो न भवतीति भावः।

(२) तेजसावृतः क्रोधाभिभूतः।

(३) द्वेष्यताम् द्वेषास्पदत्वम् सर्वे लोकाः स्वजनाश्च तं द्विषन्तीत्यर्थः।

(४) नयन् प्रणयन् प्रयुञ्जान इत्यर्थः। (५) भ्रश्यते भ्रश्यति। आत्मनेपदमार्षम्।

(६) योपकर्त्तृन् च उपकर्त्तृन्। सन्धिरार्षः।

(७) शत्रुषु मित्रेषु चाविशेषेण क्रोधं प्रदर्शयतीत्यर्थः।

(८) वेश्मगतात् गृहस्थितात्। (९) भवः कुशलं सम्पत् वा।

(१०) अन्तरं छिद्रम्। विकुरुते प्रतिकूलो भवति।

(११) तेजः क्रोधम् अति अतिशयेन न उत्सृजेत् न प्रयुञ्जीत नात्यर्थं क्रोधवशो भवेदित्यर्थः।

काले काले तु संग्रामे मृदुस्तीक्ष्णोऽपि वा भवेत् ॥
काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
ये हि नित्यमसंत्याज्या (१) यथा प्राहुर्मनीषिणः ॥
पूर्व्वोपकारी (२) यस्ते स्यादपराधे गरीयसि (३) ।
उपकारेण (४) तत् तस्य (५) क्षन्तव्यमपराधिनः ॥
अबुद्धिमाश्रितानान्तु क्षन्तव्यमपराधिनाम् (६) ।
न हि सर्व्वत्र पाण्डित्यं (७) सुलभं पुरुषेण वै ॥
अथ ये बुद्धिजं कृत्वा ब्रूयुर्वै तदबुद्धिजम् ।
पापान् स्वल्पेऽपि तान् हन्यादपराधे तथानृजून् (८) ॥
सर्व्वस्यैकोऽपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
द्वितीये सति दण्डस्तु स्वल्पेऽप्यपकृते (९) भवेत् ॥

---

(१) ये क्षमाकालाः नित्य सर्व्वकालमेव असंत्याज्याः अपरिहार्य्याः तेषु क्षमाप्रदर्शनमवश्यकार्य्यमिति भावः ।
(२) यः पूर्व्वमुपकृतवान् ।
(३) अपराधे गरीयसि अतिमहत्यपि अपराधे ।
(४) उपकारेण पूर्व्वकृतोपकारानुरोधेन पूर्व्वकृतमुपकारं संस्मृत्येत्यर्थः ।
(५) तत् अपराधरूपमसदाचरणम् ।
(६) अबुद्धिम् अज्ञानम् आश्रितानाम् अपराधिनाम् अज्ञानतः कृतापराधानामित्यर्थः । (७) पाण्डित्यम् अभिज्ञता ।
(८) तथा अनृजून् तथा कपटचारिणः । (९) अपकृते अपराधे इति यावत् ।

एत एवंविधाः कालाः क्षमायाः परिकीर्त्तिताः ।
अतोऽन्यथानुवर्त्तत्सु (१) तेजसः काल उच्यते ॥
तदहं तेजसः कालं तव मन्ये नराधिप ।
धार्त्तराष्ट्रेषु लुब्धेषु सततञ्चापकारिषु ॥
न हि कश्चित् क्षमाकालो विद्यतेऽद्य कुरून् प्रति ।
तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि (२) ॥
मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः ।
काले प्राप्ते द्वयञ्चैतद्यो (३) वेद स महीपतिः (४)

युधिष्ठिर उवाच ।

क्रोधो हन्ता मनुष्याणां (५) क्रोधो भावयिता (६) पुनः ।
इति विद्धि महाप्राज्ञे क्रोधमूलौ भवाभवौ (७) ॥
यो हि संहरते क्रोधं भवस्तस्य सुशोभने ।

---

(१) अतोऽन्यथानुवर्त्तत्सु, अत एतेभ्यः अन्यथा प्रकारान्तरेण अनुवर्त्तत्सु प्रवर्त्तमानेषु नरेषु एतद्व्यतिरिक्तस्थलेष्वित्यर्थः । अनुवर्त्तत्सु इति परस्मैपदमार्षम् ।

(२) उत्स्रष्टुं प्रयोक्तुम् ।

(३) द्वयं चैतत् क्षमा तेजश्चेति द्वयम् ।

(४) महीपतिः राजा राज्यभाक् भवतीत्यर्थः ।

(५) अस्थाने अकाले च प्रयुक्तः सन्निति भावः ।

(६) स्थाने काले च प्रयुक्तः सन्निति भावः भावयिता वर्द्धयिता शुभफलोत्पादक इति यावत् ।

(७) इति अस्मात् कारणात् । भवाभवौ शुभाशुभे सम्पद्विनाशौ वा ।

यः पुनः पुरुषः क्रोधं नित्यं न सहते (१) शुभे ।
तस्याभवाय भवति क्रोधः परमदारुणः ॥
क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ।
तत् कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् (२) ॥
क्रुद्धः पापं नरः कुर्य्यात् क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते (३) ॥
वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।
नाकार्य्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ।
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥
एतान् दोषान् प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ।
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् (४) ।
एतत् द्रौपदि सन्धाय (५) न मे मन्युः प्रवर्त्तते ॥
आत्मानञ्च परञ्चैव त्रायते महतो भयात् ।
क्रुध्यन्तमप्रतिक्रुध्यन् (६) द्वयोरेष चिकित्सकः (७) ॥

---

(१) न सहते न पराजयते ।

(२) उत्सृजेत् प्रयुञ्जीत ।

(३) श्रेयसः श्रेष्ठान् मान्यानिति यावत् ।

(४) चरेत् आचरेत् अवलम्बेत इति यावत् ।

(५) सन्धाय विविच्य ।

(६) अप्रतिक्रुध्यन् क्षममाणः ।

(७) एष क्षममाणः पुरुषः द्वयोः स्वस्य परस्य चेत्युभयोः चिकित्सकः प्राणरक्षिता अक्षमायामुभयोरपि प्राणविनाशस्य सम्भावितत्वात् ।

यस्तु क्रोधं समुत्पन्नं प्रज्ञया प्रतिबाधते ।
तेजस्विनं तं विद्वांसो मन्यन्ते तत्त्वदर्शिनः ॥
दाक्ष्यं ह्यमर्षः शौर्य्यञ्च शीघ्रत्वमिति (१) तेजसः ।
गुणाः क्रोधाभिभूतेन न शक्या प्राप्तुमञ्जसा (२) ॥
यदि न स्युर्मानुषेषु क्षमिणः पृथिवीसमाः ।
न स्यात् सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः (३) ॥
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म(४) तपस्विनाम् ।
क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा शमः ।
तां क्षमां तादृशीं कृष्णे कथमस्मद्विधस्त्यजेत् ॥
इह सम्मानमृच्छन्ति परत्र च शुभां गतिम् ।
येषां मन्युर्मनुष्याणां क्षमयाभिहतः (५) सदा ॥

---

(१) दाक्ष्यं कर्मसु कौशलम् । अमर्षः अपमानासहिष्णुता । शौर्य्यं शूरता विपक्षपराजयशक्तिरिति यावत् । शीघ्रत्वम् आशुकारिता ।
(२) अञ्जसा तत्त्वेन ।
(३) विग्रहः विरोधः ।
(४) ब्रह्म तपः ।
(५) अभिहतः पराजितः ।

## धृतराष्ट्रविलापः ।

जयत्सु पाण्डुपुत्त्रेषु श्रुत्वा सुमहदप्रियम् ।
धृतराष्ट्रश्चिरं ध्यात्वा सञ्जयं वाक्यमब्रवीत् ॥

यदाश्रौषं जातुषाद्वेश्मनस्तान्
मुक्तान् पार्थान् पञ्च कुन्त्या समेतान् ।
युक्तांश्चैषां (१) विदुरं स्वार्थसिद्धौ
तदा नाशंसे विजयाय सञ्जय ॥

यदाश्रौषं द्रौपदीं रङ्गमध्ये
लक्ष्यं भित्त्वा निर्जितामर्ज्जुनेन ।
शूरान् पाञ्चालान् पाण्डवेयांश्च युक्तान् (२)
तदा नाशंसे विजयाय सञ्जय ॥

यदाश्रौषं मागधानां वरिष्ठं
जरासन्धं क्षत्रमध्ये ज्वलन्तम् ।
दोर्भ्यां हतं भीमसेनेन गत्वा
तदा नाशंसे विजयाय सञ्जय ॥

यदाश्रौषं दिग्जये पाण्डुपुत्त्रै-
र्वशीकृतान् भूमिपालान् प्रसह्य (३) ।

---

(१) युक्तम् अभिनिविष्टम् ।
(२) युक्तान् मिलितान् ।
(३) प्रसह्य बलेन ।

महाक्रतुं राजसूयं कृतञ्च
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं हृतराज्यं युधिष्ठिरं
पराजितं सौबलेनाक्षवत्याम् (१) ।
अन्वागतं भ्रातृभिरप्रमेयैः (२)
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं स्नातकानां (३) सहस्रै-
रन्वागतं धर्म्मराजं वनस्थम् ।
भिक्षाभुजां ब्राह्मणानां महात्मनां
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषमर्ज्जुनं देवदेवं
किरातरूपं त्र्यम्बकं तोष्य (४) युद्धे ।
अवाप्तवन्तं (५) पाशुपतं महास्त्रं
तदा नाशंसे विजयाय सञ्जय ॥

---

(१) अक्षवत्याम् अक्षक्रीड़ायां द्यूतशालायां वा ।
(२) अन्वागतम् अनुगतम् । अप्रमेयैः अपरिमेयबलविक्रमसौभ्रात्रादि-गुणयुक्तैः ।
(३) ब्रह्मचर्य्यं समाप्य गृहस्थाश्रमप्रविष्टाः स्नातकाः ।
(४) तोष्य तोषयित्वा । आर्षः प्रयोगः ।
(५) अवाप्तवन्तं लब्धवन्तम् ।

यदाश्रौषं त्रिदिवस्थं (१) धनञ्जयं
शक्रात् साक्षाद्दिव्यमस्त्रं यथावत्।
अधीयानं संशितं सत्यसन्धं (२)
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषमसुराणां बधार्थे
किरीटिनं यातममित्रकर्षणम् ।
कृतार्थञ्चाप्यागतं शक्रलोकात् (३)
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं घोषयात्रागतानां (४)
बन्धं गन्धर्वैर्मोक्षणञ्चार्ज्जुनेन ।
स्वेषां सुतानां कर्णबुद्धौ रतानां
तदा नाशंसे विजयाय सञ्जय ॥

---

(१) त्रिदिवस्थं त्रिदिवः स्वर्गः तत्र स्थितम्।

(२) संशितम् संशितव्रतं सङ्कल्पितव्रतसाधने यत्नं कुर्व्वाणमित्यर्थः। सत्यसन्धम् अवन्ध्यप्रतिज्ञम्।

(३) कृतार्थं कृतकार्य्यं सम्पादितासुरवधरूपकार्य्यमिति यावत्।

(४) घोषः आभीरपल्ली गोरक्षकाणामावास इति यावत् तत्र यात्रा प्रस्थानं घोषयात्रा घोषयात्रागतानां द्वैतवनवर्त्तिनीमाभीरपल्लीं प्रस्थितानाम् ऐश्वर्य्यप्रदर्शनेन द्वैतवनस्थितान् पाण्डवान् परितापयितुं गोदर्शनव्यपदेशेन तत्र गत्वा दुर्य्योधनादयो गन्धर्वैर्बद्धा अभूवन्।

यदाश्रौषं न विदुर्मामकास्तान् (१)
प्रच्छन्नरूपान् वसतः पाण्डवेयान्।
विराटराष्ट्रे सह कृष्णया तथा
तदा नाशंसे विजयाय सञ्जय॥

यदाश्रौषं मामकानां वरिष्ठान्
धनञ्जयेनैकरथेन भग्नान् (२)।
विराटराष्ट्रे वसता महात्मना
तदा नाशंसे विजयाय सञ्जय॥

यदाश्रौषं निर्जितस्याधनस्य
प्रव्राजितस्य (३) स्वजनात् प्रच्युतस्य।
अक्षौहिणीः (४) सप्त युधिष्ठिरस्य
तदा नाशंसे विजयाय सञ्जय॥

यदाश्रौषं माधवं वासुदेवं
सर्व्वात्मना पाण्डवार्थे निविष्टम् (५)।

---

(१) विदुः विविदुः। वर्त्तमानप्रयोग आर्षः।
(२) भग्नान् पराजितान्।
(३) प्रव्राजितस्य निर्वासितस्य।
(४) १०९३५० पदातयः ६५६१० अश्वाः २१८७० रथाः २१८७० गजाः
एतदात्मिका सेना अक्षौहिणी।
(५) सर्व्वात्मना सर्व्वप्रयत्नेन पाण्डवार्थ पाण्डवानां हितसाधने निविष्टम्
उद्युक्तं स्वमिति यावत्।

यस्येमां गां विक्रममेकमाहुः (१)
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं लोकहिताय कृष्णं
शमार्थिनमुपयातं कुरूणाम् ।
शमं कुर्व्वाणमकृतार्थञ्च यातं
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं मन्त्रिणं वासुदेवं
तथा भीष्मं शान्तनवञ्च तेषाम् ।
भारद्वाजञ्चाशिषोऽनुब्रुवाणं (२)
तदा नाशंसे विजयाय सञ्जय ॥
यदा कर्णो भीष्ममुवाच वाक्यं
नाहं योत्स्ये युध्यमाने त्वयीति ।
हित्वा सेनामपचक्राम चापि
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं वासुदेवार्ज्जुनौ तौ
तथा धनुर्गाण्डिवमप्रमेयम् (३) ।

(१) इमां गां पृथिवीं यस्य वासुदेवस्य एकं विक्रमं पदक्षेपम् आहुः वर्णयन्ति । बलिच्छलनकाले नारायण एकेन पदक्षेपेण कृत्स्नां महीं व्याप्तवान् इति पौराणिकी कथा ।
(२) भारद्वाजं द्रोणम् ।
(३) गाण्डिवम् अर्ज्जुनस्य धनुः ।

कौरव्यवीर्य्याणि समागतानि
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं भीष्ममित्रकर्षणं
निघ्नन्तमाजावयुतं रथानाम् (१) ।
नैषां कश्चिद्वध्यते ख्यातरूप-(२)
स्तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं भीष्ममत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
शिखण्डिनं (३) पुरतः स्थापयित्वा
तदा नाशंसे विजयाय सञ्जय ॥
यदा द्रोणो विविधानस्त्रमार्गान् (४)
निदर्शयन् समरे चित्रयोधी (५)
न पाण्डवान् श्रेष्ठतरान् (६) निहन्ति
तदा नाशंसे विजयाय सञ्जय ॥

---

(१) रथानां रथिनाम् ।
(२) ख्यातरूपः विख्यातनामा वीरत्वेन प्रसिद्ध इति यावत् ।
(३) शिखण्डिनं तदाख्यं द्रुपदपुत्रम् ।
(४) अस्त्रमार्गान् अस्त्रप्रयोगकौशलानि ।
(५) चित्रयोधी अद्भुतयोद्धा चक्रेपरणकौशलाभिज्ञो वा ।
(६) पाण्डवान् पाण्डवपक्षीयान् श्रेष्ठतरान् अतिश्रेष्ठान् योद्धृपुरुषान् ।

यदाश्रौषं चास्मदीयान् महारथान्
व्यवस्थितानर्ज्जुनस्यान्तकाय (१) ।
संशप्तकान् (२) निहतानर्ज्जुनेन
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं व्यूहमभेद्यमन्यै-(३)
र्भारद्वाजेनात्तशस्त्रेण गुप्तम् (४) ।
भित्त्वा सौभद्रं (५) वीरमेकं प्रविष्टं
तदा नाशंसे विजयाय सञ्जय ॥
यदाभिमन्युं परिवार्य्य बालं
सर्व्वे हत्वा हृष्टरूपा (६) बभूवुः ॥
महारथाः पार्थमशक्नुवन्त-(७)
स्तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषमभिमन्युं निहत्य
हर्षान्मूढान् क्रोशतो (८) धार्त्तराष्ट्रान् ।

---

(१) अन्तकाय वधाय ।

(२) प्राणात्ययेऽपि न वयं संग्रामान्निवर्तिष्यामहे इति कृतशपथा योद्धृविशेषाः संशप्तकाः । (३) व्यूहं सैन्यसन्निवेशविशेषम् ।

(४) आत्तशस्त्रेण गृहीतशस्त्रेण । गुप्तं रक्षितम् ।

(५) सौभद्रं सुभद्रागर्भसम्भूतम् अर्ज्जुनतनयमभिमन्युम् ।

(६) हृष्टरूपाः हर्षोत्फुल्लकलेवराः ।

(७) पार्थमशक्नुवन्तः पार्थं हन्तुमशक्नुवन्तः ।

(८) हर्षात् क्रोशतः कृतहर्षनिनादान् ।

क्रोधादुक्तं सैन्धवे चार्ज्जुनेन (१)
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं द्रोणः कृतवर्म्मा कृपश्च
कर्णो द्रौणिर्मद्रराजश्च (२) शूरः ।
अमर्षयन् (३) सैन्धवं बध्यमानं
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं नागबलैः सुदुःसहं
द्रोणानीकं युयुधानं (४) प्रमथ्य ।
यातं वार्ष्णेयं (५) यत्र तौ कृष्णपार्थौ ।
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं द्रोणमाचार्य्यमेकं
धृष्टद्युम्नेनाभ्यतिक्रम्य धर्म्मम् ।
रणक्षेत्रे प्रायगतं विशस्तं (६)
तदा नाशंसे विजयाय सञ्जय ॥

---

(१) सैन्धवे सिन्धुराजे जयद्रथे अर्ज्जुनेन उक्तं तद्वधाय अर्ज्जुनेन कृतां प्रतिज्ञामित्यर्थः । (२) द्रौणिः अश्वत्थामा । मद्रराजः शल्यः ।
(३) अमर्षयन् सहन्ते स्म । (४) युयुधानं सात्यकिम् ।
(५) वार्ष्णेयं वृष्णिवंशसम्भूतम् । सात्यकिविशेषणम् ।
(६) प्रायगतन् अनशने स्थितम् अश्वत्थामा हत इति श्रुत्वा अनशनेन प्राणांस्त्यक्ष्यामीति कृतसङ्कल्पमित्यर्थः । विशस्तं निहतम् ।

यदाश्रौषं भीमसेनेन पीतं
रक्तं भ्रातुर्युधि दुःशासनस्य ।
निवारितं नान्यतमेन (१) भीमं
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं कर्णमत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
तस्मिन् भ्रातॄणां विग्रहे घोररूपे (२)
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं निहतं मद्रराजं
रणे शूरं धर्मराजेन (३) सूत ।
सदा संग्रामे स्पर्द्धते यस्तु कृष्णं
तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं कलहद्यूतमूलं
मायाबलं (४) सौबलं पाण्डवेन ।
हतं संग्रामे सहदेवेन पापं
तदा नाशंसे विजयाय सञ्जय ॥

---

(१) अन्यतमेन अस्मत्पक्षीयेण केनापि न निवारितं दुःशासनरुधिरपानव्यवसायान्निवर्तयितुमशक्तितम् ।
(२) विग्रहे संग्रामे । घोररूपे भयङ्करे । (३) धर्मराजेन युधिष्ठिरेण ।
(४) कलहद्यूतमूलं कलहः भ्रातृविरोधः द्यूतम् अक्षक्रीड़ा तयोर्मूलम् । मायाबलं मायाकपटं सैव बलमस्य तम् ।

यदाश्रौषं ह्रान्तमेकं शयानं (१)
　　ह्रदं गत्वा स्तम्भयित्वा तदम्भः (२) ।
दुर्य्योधनं विरथं भग्नशक्तिं (३)
　　तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं पाण्डवांस्तिष्ठमानान् (४)
　　गत्वा ह्रदे वासुदेवेन सार्द्धम् ।
अमर्षणं धर्षयतः (५) सुतं मे
　　तदा नाशंसे विजयाय सञ्जय ॥
यदाश्रौषं विविधांश्चित्रमार्गान्
　　गदायुद्धे मण्डलशश्चरन्तम् (६) ।
मिथ्याहतं वासुदेवस्य बुद्धा (७)
　　तदा नाशंसे विजयाय सञ्जय ॥
शोच्या गान्धारी पुत्रपौत्रैर्विहीना
　　तथा बन्धुभिः पितृभिर्भ्रातृभिश्च ।

---

(१) शयानं विश्राम्यन्तम् ।　(२) तदम्भः तस्य ह्रदस्य अम्भः जलम् ।

(३) विरथं हतसैन्यम् । भग्नशक्तिं भग्नपराक्रमम् ।

(४) तिष्ठमानान् तिष्ठतः । आत्मनेपदमार्षम् ।

(५) धर्षयतः भर्त्सयतः ।

(६) मण्डलशः मण्डलाकारगत्या गदायुद्धे विविधान् बहुविधान् चित्रमार्गान् अद्भुतोपायान् अद्भुतशिक्षाकौशलानि वा चरन्तं दर्शयन्तम् ।

(७) वासुदेवस्य कृष्णस्य बुद्धा युक्त्या उपदेशेनेति यावत् मिथ्याहतं मिथ्याछलेन धर्म्ममार्गमतिक्रम्येत्यर्थः हतम् ।

कृतं कार्य्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यमसपत्नं पुनस्तैः ॥
कष्टं युद्धे दश शेषाः श्रुता मे
त्रयोऽस्माकं (१) पाण्डवानाञ्च सप्त (२) ।
द्व्यूना विंशतिराहताक्षौहिणीनां (३)
तस्मिन् संग्रामे भैरवे क्षत्रियाणाम् ॥
तमस्त्वतीव विस्तीर्णं मोह आविशतीव माम् ।
संज्ञां नोपलभे सूत मनो विह्वलतीव मे (४) ॥
इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य बहु दुःखितः ।
मूर्च्छितः पुनराश्वस्तः (५) सञ्जयं वाक्यमब्रवीत् ॥
सञ्जयैवं गते प्राणांस्त्यक्तुमिच्छामि माचिरम् ।
स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे (६) ॥
तं तथावादिनं दीनं विलपन्तं महीपतिम् ।
निश्वसन्तं यथा नागं मुह्यमानं (७) पुनः पुनः ।

---

(१) कृपः अश्वत्थामा कृतवर्म्मा चेति ।
(२) कृष्णः सात्यकिर्युधिष्ठिरो भीमोऽर्ज्जुनो नकुलः सहदेवश्चेति ।
(३) द्व्यूना विंशतिः द्वाभ्यामूना विंशतिः अष्टादश ।
(४) तमः अज्ञानम् । संज्ञां चेतनाम् । विह्वलति व्याकुलो भवति । इववयम् आतिशय्यव्यञ्जकम् । (५) पुनराश्वस्तः पुनर्लब्धसंज्ञः ।
(६) एवं गते इत्थं प्रवृत्ते ईदृशि दशान्तरे आपतिते सतीत्यर्थः । माचिरम् अचिरेण । स्तोकम् अल्पम् ।
(७) मुह्यमानं मुह्यन्तम् । आत्मनेपदमार्षम् ।

गावल्गणिरिदं (१) धीमान् महार्थं वाक्यमब्रवीत्॥
द्वैपायनस्य वदतो नारदस्य च धीमतः (२)।
श्रुतवानसि वै राज्ञो महोत्साहान् महाबलान्।
महत्सु राजवंशेषु गुणैः समुदितेषु च।
जातान् दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः।
धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वा सदक्षिणैः।
अस्मिन् लोके यशः प्राप्य ततः कालवशं गतान्॥
हित्वा सुविपुलान् भोगान् बुद्धिमन्तो महाबलाः।
राजानो निधनं प्राप्तास्तव पुत्त्रा इव प्रभो॥
येषां दिव्यानि कर्म्माणि विक्रमस्त्याग एव च।
माहात्म्यमपि चास्तिक्यं सत्यं शौचं दयार्ज्जवम्।
विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः।
सर्व्वर्द्धिगुणसम्पन्नास्ते चापि निधनं गताः॥
तव पुत्त्रा दुरात्मानः प्रतप्ताश्चैव मन्युना।
लुब्धा दुर्वृत्तभूयिष्ठा (३) न तान् शोचितुमर्हसि॥
श्रुतवानसि मेधावी बुद्धिमान् प्राज्ञसम्मतः।
येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति भारत (४)॥

---

(१) गवल्गणस्यापत्यं पुमान् गावल्गणिः सञ्जयः।

(२) तयोः सकाशादित्यर्थः।

(३) दुर्वृत्तभूयिष्ठाः दुराचारबहुलाः अतिदुरात्मान इति यावत्।

(४) श्रुतवान् अधीतशास्त्रः। प्राज्ञसम्मतः पण्डितानां पूजितः प्राज्ञसम्मतः

भवितव्यं तथा तच्च नानुशोचितुमर्हसि ।
दैवं प्रज्ञाविशेषेण कोऽतिवर्त्तितुमर्हति (१) ।
विधातृविहितं (२) मार्गं न कश्चिदतिवर्त्तते ॥
कालमूलमिदं सर्वं भावाभावौ सुखासुखे ॥
कालः सृजति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः (३) ॥
अतीता नागता भावा (४) ये च वर्त्तन्ति (५) साम्प्रतम् ।
तान् कालनिर्मितान् बुद्ध्वा न संज्ञां हातुमर्हसि ॥
इत्येवं (६) पुत्रशोकार्त्तं धृतराष्ट्रं जनेश्वरम् ।
आश्वास्य स्वस्थमकरोत् सूतो गावल्गणिस्तदा ॥

---

इत्यार्षः प्रयोगः प्राज्ञानां सम्मतः इत्यसमस्त एव साधुः। शास्त्रानुगा शास्त्रानुसारिणी ।

(१) दैवं विधिनिर्बन्धम्। प्रज्ञाविशेषेण बुद्धिविवेकबलेन। अतिवर्त्तितुम् अतिक्रमितुम् ।

(२) विधातृविहितं दैवनियमितम् ।

(३) दुरतिक्रमः दुष्परिहरः ।

(४) नागता अनागता इति यावत् भविष्यन्तः । भावाः विषयाः ।

(५) वर्त्तन्ति वर्त्तन्ते । परस्मैपदमार्षम् ।

(६) इत्येवमित्यस्य आश्वास्येत्यनेनान्वयः। इत्येवमाश्वास्य उक्तप्रकारेण सान्त्वयित्वा ।

অর্থাৎ

পণ্ডিত শ্রীযুক্ত কালিপদ মুখোপাধ্যায় প্রণীত

এই পুস্তকের উৎকৃষ্ট বাঁধা মূল্য ১৷৹ স্থলে ১৶৹।

ইহাতে ইংরাজী ও বাঙ্গালা ট্রেন্সলেসন প্রভৃতি যাবতীয় বিষয় দেওয়া হইয়াছে। বালকগণ ব্যাখ্যা খরিদ কালে এই ব্যাখ্যা খানি দেখিয়া পছন্দ না হইলে অন্য ব্যাখ্যা ক্রয় করিবেন ইহাই অনুরোধ।